संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखे
षप्रयत्नधर्माधर्मभावनाख्याः । ईश्वरस्तु संख्यादि
ज्ञानेच्छाप्रयत्नवान् । ननु जीवोऽप्येक एवास्त्विति
न । एकमुक्तत्वे सर्वेषां मुक्तत्वापत्तेः[1] । वामदेवादि
क्तत्वप्रतिपादकागमाप्रामाण्यापत्तेश्च । यत्तु जीव
परसमवेतसुखादेः परस्य प्रत्यक्षापत्तिरिति । तत्तु
परशब्देनात्मनोऽभिधाने इष्टत्वात् । शरीराभिधा
सम्भवात् शरीरे प्रत्यक्षाभावात् । अवच्छेदकतया
रान्तरे स्यादित्यपि न । हस्तेऽवच्छेदकतासम्बन्धे
द्यमानसुखस्यावच्छेदकतासम्बन्धेन पादे कारणाभ
वाभाववत्तच्छरीरे विद्यमानसुखस्य शरीरान्तरेऽ
कतयाऽभावेन तत्प्रत्यक्षस्याप्यवच्छेदकतया त
धात् । अवच्छेदकतासम्बन्धेन तत्र सुखादिप्रत्यक्षे
दकतया तत्र सुखादेरपि हेतुत्वात् । एवं सर्वत्र सु
पादनं निरसनीयमिति दिक् । ईश्वरे प्रमाणमग्रे वक्ष्

मनस्त्वजातिमन्मनः । तच्च नानाऽणु । संख्
माणपृथक्त्वसंयोगविभागदैशिकपरत्वापरत्ववेगव
न्ति मूर्तत्वाद्दैशिकपरत्वापरत्ववन्नित्यत्वाच्च का
रत्वापरत्ववत् । तच्चात्मग्राहकम् । आत्मवृत्तिज
न्यगुणवृत्तिजातितदभावानां च ग्राहकम् । नन्व
स्य मनःसद्भावे किं मानं सुखादिसाक्षात्कारे सुख
त्वेनैवानतिप्रसङ्गात् । न चात्मनः सुषुप्तिकाले
ऽपि प्रसङ्गः । ज्ञानाद्यविषयकात्मप्रत्यक्षासम्भवेन
ज्ञानाद्यभावेन ज्ञानादिविषयकात्मप्रत्यक्षासम्भव

[1] [illegible]

। मनसोऽनङ्गीकारे सुषुप्त्यव्यवहितपूर्वक्षणावृत्त्या-
ग्यविशेषगुणस्यैव प्रत्यक्षसम्भवेन ततस्तत्प्रत्यक्षत-
क्षधारासंभवेन सुषुप्त्यनुपपत्तेः न च सुषुप्त्यव्य-
तपूर्वक्षणे निर्विकल्पकस्यैवाङ्गीकारस्तस्य चायोग्य-
त्र प्रत्यक्षमिति सुषुप्त्युपपत्तिरिति वाच्यम् । सुषु-
व्यवहितपूर्वक्षणे यस्यैव प्रत्यक्षं निर्विकल्पकं तस्यै-
ो सविकल्पकसम्भवेनाग्रे तत्प्रत्यक्षसम्भवेन सुषुप्त्यनु-
त्तेः । निर्विकल्पकस्य फलैकोन्नेयत्वेन तदा निर्विक-
कसत्त्वे प्रमाणाभावाच्च[1] । न च मनसः स्वीकारेऽप्या-
ां विभुत्वेन मनःसंयोगस्य सम्भवेन सुषुप्त्यनुपपत्ति-
ति वाच्यम् । त्वङ्मनोयोगस्यापि ज्ञानमात्रे कारण-
स्वीकारेण सुषुप्तिकाले मनसः पुरीततीसंयुक्ततया तत्र
ङ्गाभावेन त्वङ्मनोयोगाभावात् सुषुप्त्युपपत्तेरिति
चित् ।

अन्ये तु चर्ममनोयोगस्य शरीरमनोयोगस्य वा ज्ञान-
मात्रे हेतुत्वान्न सुषुप्त्यनुपपत्तिरित्याहुः ।

अपरे तु क्रियासंयोगयोर्विशिष्यैव कारणत्वं वा-
म् । अन्यथा घटक्रियया भूतलसंयोगवत् तत्रत्यसर्व-
ष्वपि संयोगजननापत्तेः । तथा च तदानीन्तनमनः-
यथाऽन्यत्र संयोगजननेऽपि नात्मनि संयोगो जन्यते
नाभावात् । न चैतत्कालीनसर्वमूर्त्तसंयोगित्वं, तथा च
ानीन्तनमनःक्रियया कथमात्मनि संयोगो न जन्यत

१ भवद्भिः सुषुप्त्यनुरोधेनाऽप्रत्यक्षपुरीततिमनःसंयोगः स्वीक्रियते तद्वन्ममापि
प्त्यनुरोधेन सुषुप्तिप्राक्काले नियमेन निर्विकल्पकमेव स्वीक्रियते । सविकल्पका-
काले चाक्षुषद्रव्ये चक्षुरिन्द्रियसंयोगः स्वीक्रियते । पश्चात्सविकल्पककाले द्रव्यक्रियया
संयोगनाशात्तस्य च कार्यसहभावेन हेतुत्वस्वीकारेण न सविकल्पकसंभव इति ।

इति वाच्यम् । एतत्कालोत्पन्नद्रव्यैस्तदात्मादौ
भावेनाविभुत्वापत्तेः । कदाचित् [illegible]संयोगि
चेत् तदस्मन्मतेऽपि । न वा तदपि, किंतु पर
तथा च सुषुप्तावात्ममनःसंयोगाभावादेव न ज्ञान

ननु त्वङ्मनोयोगस्य ज्ञानसामान्ये हेतौ
तदानीं ज्ञानाभावः । तस्य ज्ञानसामान्ये हेतुत्वे
भावात् । अन्यथा चाक्षुषादिज्ञानकालेऽपि त्वा
पत्तिः । चाक्षुषादिज्ञानान्यथानुपपत्त्यैव त्वङ्मनःसं
योगस्य सत्त्वात् । न च चाक्षुषादिसामग्र्यास्तत्र प्र
कत्वं वाच्यम् । अनन्तप्रतिबध्यप्रतिबन्धकभावकल्प
रवादित्याहुः ।

अन्ये तु घ्राणरसनचक्षुस्त्वगिन्द्रियाणां स्वस्व
पकगुणसन्निकर्षे सति गन्धादीनां चतुर्णामेकं ज्ञा
वा स्यात् न त्वेकस्यैव ज्ञानम् । तथा चैकस्यैव तदा
नोपपादनार्थमिन्द्रियमनःसंयोगस्य कारणत्वं व
तथा च येनेन्द्रियेण मनःसंयोगोऽस्ति तत्प्रत्यक्षं त
नान्यत् । तथा च मनसोऽणुत्वे सर्वैः सह तदा सं
म्भवान्न सर्वैस्तदानीं प्रत्यक्षं जन्यत इति मनसोऽणु
सिद्धिः । न च दध्यत्सु पच्यमानेष्वपि बुभुत्सावशाद्
त्सितानां ग्रहणं नाबुभुत्सितानां तथा रूपादिषु बु
तस्यैव ग्रहणं नाबुभुत्सितस्येति वाच्यम् । बुभु
नाबुभुत्सितग्रहणे प्रतिबन्धकत्वं न वा बुभुत्सि
दिप्रत्यक्षे हेतुत्वं रूपबुभुत्सायामपि अबुभुत्सितपरि
दिग्रहात् । न च रूपबुभुत्साया रूपाविषयकज्ञाने

सां विनाऽपि रूपप्रत्यक्षसम्भवेन व्यभिचारात्। बुभुत्स
श्रयादृगाया ग्रहणं त्वित्थम्। बुभुत्सा हि बुभुत्सितशब्द
वच्छिन्नश्रोत्रे मनःसंयोगसम्पादकतयोपयुज्यते। त
च्छब्दावच्छेदेन श्रोत्रमनःसंयोगसम्पादकतयोपयुज्यते
तत्तच्छब्दावच्छेदेन श्रोत्रमनःसंयोगस्य हेतुत्वात्। ए
रूपादिबुभुत्साऽपि रूपग्राहकेन्द्रिये मनःसंयोगसम्पाद
त्वेनोपयुक्ता मनसोऽणुत्वस्यैव साधिका। अन्यथा रू
दिचतुर्णां बुभुत्सायां चतुर्णामेकज्ञानविषयत्वं ज्ञाना
षयत्वं वा स्यादित्याहुः।

नव्यास्तु सुषुप्त्यन्यथानुपपत्त्या न मनसः सिद्धि
मनस्त्वाश्रयतत्संयोगादिकल्पनापेक्षया लाघवेन ज
ज्ञानकारणतावच्छेदकजातेः सुषुप्तिकालीनात्मसंयोगे
कल्पनात्। विजातीयसंयोगस्य समवायेन ज्ञानादौ हे
त्वात्। तच्च वैजात्यं जाग्रत्कालीनपृथिव्याद्यात्मसंये
ष्वेव। अत एव पार्थिवपरमाणवो वा मनांसीति दी
तिविवृतिकारैरपि ज्ञानकारणात्मसंयोगाश्रयत्वेन
मनस्त्वं स्वीकृतं न तु ज्ञानकारणपृथिवीपरमाण्वात्म
योगाश्रयत्वेन, तत्त्वेन कारणत्वे गौरवात्। जलपरम
ण्वात्मसंयोगत्वेन विनिगमनाविरहाच्च। नापि युगपज्
नानुपपत्त्या तत्सिद्धिः। रूपादिभिः सन्निकर्षस्य फलैके
यत्वेन यत्र यस्यैव प्रत्यक्षं तद्ग्राहकेन्द्रियसन्निकर्ष
समारतीति कल्पनादेकज्ञानोपपत्तेः। एवं य एव श
गृह्यते तस्यैव कदम्बगोलकन्यायेनोत्पादकल्पनया कप
च्छिन्नत्वात् तस्यैव प्रत्यक्षस्योपपत्तेः। अत एव तस्य ऐ

रूपपरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारशब्दसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मबुद्धा चतुर्विंशतिविधः ।

गुणत्वजातिस्तु रूपादौ गुण इत्याकारकप्रत्ययसिद्धा । अतीन्द्रियरूपादौ तत्सिद्धिस्तु सङ्करभयगुरुत्वादौ धर्मिग्राहकमानादिति प्राञ्चः ।

अपरे तु रूपरसादौ गुणाकाराध्यक्षं नैषामरणं येन तत्सिद्धिः स्यात् । नापि द्रव्यकर्मान्यस्मिन् सामान्यवति याः कारणतास्तदवच्छेदकतया तत्सिद्धिः एवंविधप्रकारेण जातिसिद्धेरभावात् । अन्यथा न्यस्मिन् सामान्यवति याः कारणतास्तदवच्छेदकत्वे जातिसिद्धौ तथा सङ्करापत्तेः । अत एव सामान्यवति न्यस्मिन् वर्तते यः संयोगसमवायिकारणत्वाभावस्तदवच्छेदकतयाऽपि न गुणत्वसिद्धिः । रूपान्यसामान्यसंयोगसमवायिकारणत्वाभावात् तदवच्छेदकतया उ सिद्धौ तथा सङ्करप्रसङ्गात् । तस्माद् द्रव्यकर्मान्यत्वे सामान्यवत्त्वं गुणत्वं, रूपाद्यन्यतमत्वं तु न गुणत्वं वात् । गुरुत्वादेर्निरस्यत्वेन तद्घटितान्यतमत्वस्यार विरत्वाच्चेति प्रागेवास्माभिः (?) यमित्याहुः ।

ते द्विविधाः । सामान्यगुणा विशेषगुणाश्च । विशेषगुणाः रूपरसगन्धस्पर्शसांसिद्धिकद्रवत्वस्नेहसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मबुद्धिभावनाख्याः । अन्ये सामान्यगुणाः । विशेषगुणलक्षणं तु एकद्रव्यविभाजकोपाध्यवच्छिन्नवृत्तिवृत्ति अपरद्रव्यविभाजकोपाध्यवच्छिन्नवृत्त्यवृत्तिजातिमद्गुणत्वम् । न चैवमनयोर्लक्षण

। एवं पृथिवीजलरूपरसयोरपि जातिभेदाङ्गीकारा-
।सिः ।

तत्र रूपत्वजातिमद्रूपम् । रूपत्वजातिस्तु नीलरू-
रूपाद्यनुगताध्यक्षेण सिद्धा । न चातीन्द्रियनीलादे
त्वसिद्धिः स्यादिति वाच्यम् । समवायेन विजातीय-
दिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलादेर्हेतु-
नीलत्वादेःपरमाणुनीलादिवृत्तित्वेन साङ्कर्यवारणाय
ादेः परमाणुरूपादिवृत्तित्वस्वीकारात् । न च रूप-
ेना रूपत्वाद्यवच्छिन्नं प्रति कारणत्वात् प्रत्यक्ष-
रूपत्वादेरेव कारणतावच्छेदकतया परमाणुरूपादे
ादिसिद्धिरिति वाच्यम् । रूपत्वादेर्नित्यवृत्तितया
तानवच्छेदकत्वात् । नापि जन्यरूपत्वादिकं रूपा-
र्यतावच्छेदकं पाकादपि रूपादेर्जायमानत्वेन व्यभि-
त् नापि विजातीयरूपत्वादिकं नीलत्वादेः पाकजनी-
ेवृत्तित्वेन रूपादिजन्यतावच्छेदकवैजात्यस्य पीता-
त्तित्वेनोभयो रूपादिजन्यनीलादिवृत्तित्वेन नीलत्वा-
सङ्करप्रसङ्गात् । नापि पाकजन्यजन्यरूपत्वादि-
पाकजन्यताऽपि रूपादौ रूपाद्यजन्यजन्यरूपत्वाव-
न्नं प्रति प्राग्नेत्यन्योन्याश्रयप्रसङ्गात् । न च विजा-
नीलादिकं प्रति पाकजन्यता तथा च पाकजन्यज-
पादिकं प्रति रूपादिजन्यत्वमिति वाच्यम् । विजा-
नीलादिकं प्रत्येव नीलादेर्हेतुत्वं रूपाद्यजन्यजन्यरू-
कं प्रति पाकस्य हेतुत्वमित्यस्यापि सुवचत्वात् ।

वस्तुतस्तु विजातीयनीलादिकं प्रति पाकस्य, विजा

यद्यपि कृम्यादिशरीरे न स्वेदः कारणं, तस्मि-
नुत्पत्तेस्तदभावे चोत्पत्तेरन्वयतो व्यतिरेकतश्च
चारः तथापि स्वेदस्य प्रयोजकत्वमाश्रित्योक्तं प्राचां
मानुषादिशरीराणां क्लेदोष्मादिनाशेऽपि गन्धोप
पार्थिवत्वसिद्धिः ।

वृक्षादौ शरीरत्वे पुराणाद्येव मानम् । ये तु
तसंरोहणेनाध्यात्मिकवायुसंबन्धानुमानात्तेषां श
सिद्धिमाहुः । तन्न । कस्तूरिकादौ यथा सजातीयावय
न्धकल्पनाम सच्छिद्रता । तद्यथा । कस्तूरिकागन्धग्रा
कस्तूरिकासंबन्धोऽवश्यं वाच्यः । अन्यथा सन्निक
र्षेन गन्धग्रहणानुपपत्तेस्तेषां कस्तूर्यवयवसंबन्धश्च
निर्गमनं विना न सम्भवतीति कस्तूरिकादेः सच्छि
प्रसक्तौ तत्र सजातीयावयवसम्बन्धकल्पनाम सच्छि
तथा सजातीयावयवसंबन्धकल्पनेन भग्नक्षतसंरोह
द्धेर्नाध्यात्मिकवायुसंबन्धे मानमिति । न वा ताव
शरीरत्वासिद्धिः । तत्संबन्धस्याकाशादिसाधारण्या
यद्यपि चक्षुरादेर्गमनेन घटादिग्रहणवद् घ्राणगमनेनैव ग
ग्रहसम्भवाज्ञेयं कल्पना तथाप्यनुकूलवातादिवैफ
ल्यं तथाकल्पनमिति प्राहुः ।

शरीरत्वं त्ववच्छेदकतासंबन्धेन सुखादेस्तादा
संबन्धेन जनकत्वम् । न च हस्तादौ शरीरत्वापत्तिः ।
त्वात् । अन्त्यावयवित्वेन विशेषणाद्वेति केचिदाहुः । श
प्यवच्छेदकतासंबन्धेन सुखाद्युत्पत्तौ न तादात्म्यसंबन्
शरीरत्वेन कारणता । पृथिवीत्वादिना सांकर्यप्रसङ्गेन श
रत्वजात्यसिद्धेः । तथाप्यवयवसंयोगानिम्नजा...

या जनकतावच्छेदकत्वं तस्या जातेः शरीरावयव-
यवादिसंयोगे कल्पनाच्च शरीरतदवयवादावच्छेदक-
बन्धेन सुखाद्यनुत्पत्तिः ।

यद्यपि सा जातिः स्वाश्रयसमवायिसमवेतत्वसम्ब-
शरीरादाविव हस्तादिगतगुणादिष्वप्यस्तीति तत्रा-
च्छेदकतासम्बन्धेन सुखाद्युत्पत्तिः, शरीरव्यवहाराप-
स्यात्तथापि द्रव्यत्वविशेषितायास्तस्याः सुखजनक-
च्छेदकत्वाच्छरीरव्यवहारादौ च प्रयोजकत्वान्न दोषः ।
केचित्तु स्वाश्रयजन्यत्वसम्बन्धेन तस्याः शरीरव्य-
रप्रयोजकत्वात्, सुखकारणतावच्छेदकत्वाच्च नातिप्र-
इत्याहुः ।

अन्ये तु चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजा-
त्वम् । तादृशजातिश्च चैत्रत्वादिः । नृसिंहशरीरेऽपि
भेदेन नरसिंहवृत्तिनृसिंहत्वस्य सत्त्वान्नोक्तदोष
ाहुस्तन्न । पृथिवीत्वादिना सङ्कराद्धस्तत्वजात्यभावे-
त्यवयविपदवैयर्थ्यात् । न च हस्तत्वं पृथिवीत्वादि-
प्यं नानैवेति वाच्यम् । शरीरत्वस्यापि पृथिवीत्वादि-
प्यनानात्वस्वीकारादेव नृसिंहशरीरे लक्षणसंभवेन
संहत्वजात्युपपादनायासवैयर्थ्यात् ।

इन्द्रियरूपा पृथिवी गन्धग्राहकमिन्द्रियम् तच्च घ्रा
[ । गन्धग्राहकेन्द्रियस्य पृथिवीत्वं त्वनुद्भूतगन्धान
कारेऽपि साधितं प्राक् । केचित्तु घ्राणं पार्थिवं रूपरस
धस्पर्शशब्देषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात् । कुङ्कु
न्धाभिव्यञ्जकघृतवत् । न च घृतस्य स्वीयरूपादिव्य

लोचनीलादिकं प्रति नीलादेर्हेतुत्वाद्रूपत्वादिना रूपा[
प्रति हेतुत्वे मानाभाव इत्याहुः ।

केचित्तु चक्षुर्मात्रग्राह्यविशेषगुणो रूपम् । स्ने
भाभिन्नसंयोगरूपत्वादिवारणाय मात्रविशेषगुणादिप
नि । न चातीन्द्रियरूपेऽव्याप्तिः । तादृशगुणवृत्तिगुण
व्याप्यजातिमत्त्वस्य विवक्षितत्वादिति प्राहुः । तन्
चक्षुर्मात्रगृहीतस्नेहविशेषवृत्तिस्नेहत्वस्य स्नेहे सत्त्वेन
हेऽतिव्याप्तिः । न च चक्षुर्मात्रग्राह्येति जातेर्विशेष
नोक्तदोष इति वाच्यम् । विशेषपदगुणत्वव्याप्यपदयो
यर्थ्यात् । प्रभात्वस्य गुणावृत्तित्वेनैव वारणादिति दि

तच्च रूपं पृथिव्यादित्रयवृत्ति । नीलपीतरक्तकपिश
रितश्वेतचित्रभेदात् सप्तविधम् । उद्भूतमनुद्भूतं च । पृ
व्यां सप्तविधमप्यनित्यमेव । जलतेजोवृत्ति शुक्लमेव ।
नित्यगतं नित्यम् । अनित्यगतमनित्यम् । नीलादिकं
नीलत्वादिजातियोगि, नीलत्वादिजातौ प्रत्यक्षमेव मान

ननु समवायेन नानारूपज्ञानाद्विजातीयनानारू
ज्ञानाद् समानाधिकरणसमानकालीनविजातीयनानारू
ज्ञानाद्वा[1] चित्रव्यवहारोपपत्तौ न चित्ररूपे मानम् ।
एव घटे क्रमिकविजातीयरूपग्रहवतोऽसमवायिकारण
द्रूपभेद इति भ्रान्यतश्च घटे नानारूपाणां समवा
ज्ञानेऽपि न चित्रव्यवहार इति चेत् ।

१ नानारूपोत्पत्तौ कालिकसंबन्धेन नानारूपवान् घट इति ज्ञाने चित्रव्यव
स्यादिति समवायेनेति । तावत्युक्तौ श्यामकपालारब्धघटावयवसमवायिकार
णाद्रूपभेद इति भ्रमाद्धश्यामरूपवानयं घट इति भ्रान्यतश्चित्रव्यवहारः स्या
दित्यतो विजातीयेति । तावत्युक्ते समवायेन नीलो घटः पीतः पटो रक्तं कुड्यमिति ज्ञा
नाच्चित्रव्यवहारः स्यादिति समानाधिकरणेति । तावत्युक्ते पाकजक्रमिकनानारूपवान्
इति ज्ञानात् चित्रव्यवहारः स्यादिति समानकालीनेति विशिष्टमुपात्तम् । ज्ञाना

अत्र केचित् । नीलपीताद्यारब्धे घटादौ प्रत्यक्षा-
ानुपपत्त्या रूपमावश्यकम् । तत्र नीलपीतादिनाना-
स्वीकारे गौरवम् । न च नीलपीतादेः कारणत्वेन
रावश्यकत्वेन तत एव चित्रव्यवहारोपपत्तेरतिरिक्त-
ास्वीकारे गौरवमिति वाच्यम् । समवायेन नीला-
प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलेतररूपादेः
बन्धकत्वमावश्यकं वाच्यम् । अन्यथा तादृशघटादौ
कपालावच्छेदेन नीलोत्पादापत्तिः । तथा च नीलेत-
ेतरयोः परस्परं प्रतिबन्धकयोः सत्त्वान्न नीलपीत-
श्रोत्पत्तिः । अतश्चित्रमेव प्रत्यक्षान्यथानुपपत्त्या स्वी-
मित्याहुः ।

अपरे तु[1] समवायेन नीलादिकं प्रति न स्वाश्रयस-
ात्वसम्बन्धेन नीलादेर्हेतुत्वं येनोक्तरूपेण प्रतिबन्ध-
स्यात् किन्त्ववच्छेदकत्वसम्बन्धेन नीलादिकं प्रति
वायेन नीलादेः कारणत्वम् । तथा च तादृशघटादेर्नीला-
मवच्छेदकतासम्बन्धेन नीलकपालादावेवोत्पद्यते न
कपालादावपि । न च समवायेन नीलादिकं प्रति स्वा-
मवेतत्वसम्बन्धेनापि नीलादेर्हेतुत्वं वाच्यम् । अन्यथा
कपालादावच्छेदकतासम्बन्धेन जायमानं समवायेन
घटादाविवाकाशादौ पीतघटादावपि उत्पद्येतेति वा-
[। समवायेन घटादौ जायमानं प्रतीतिवशात् कपा-
ावच्छेदकतया स्वीक्रियते यथा भवद्भिः, तथावच्छे-
ासंबन्धेन जायमानं प्रतीतिवशात् समवायेन घटादौ
क्रियत इति । न हि सर्वेऽपि सम्बन्धाः कार्यतावच्छे-

१ पूर्वकल्पे तादृशकार्यकारणभावाधीनः प्रतिबध्यबन्धकभावः । तदधीनोऽसि-

दकाः । यद्वा[1] । समवायेन नीलादिकं प्रत्येव नीलादेः
अपसमवेतत्वसम्बन्धेन हेतुत्वं न त्ववच्छेदकतास
नापि । न वा नीलेतररूपादेर्नीलादिकं प्रति स्वाश्रय
वेतत्वसम्बन्धेन प्रतिबन्धकत्वम् । न चैवं तादृशा
नीलपीतादेर्व्याप्यवृत्तित्वापत्तिः । केषां चित् कार्
ऽव्याप्यवृत्तित्ववदेकस्याव्याप्यवृत्तित्वस्वीकारात् ।
एवावच्छेदकतासम्बन्धेन नीलादिकं प्रति समवा
द्रव्यस्य कारणत्वमन्यथा पटाभावदशायां नीलत
वच्छेदकतया नीलोत्पत्त्यापत्तिः । न वाऽवच्छेदकता
न्धेन रूपोत्पत्तिं प्रत्यवच्छेदकतया रूपस्य प्रतिबन्धक
न्तरं कल्पनीयम् । अन्यथाऽवच्छेदकतासम्बन्धेना पक्षे
पुनरवच्छेदकतया नीलापत्तेः । पाकात् समवायेन
त्पत्तेः पुनरुत्पादवारणार्थं समवायेन रूपं प्रति समव
रूपस्य प्रतिबन्धकत्वस्यावश्यकत्वात् । न च नीलावय
च्छिन्नचक्षुःसंयुक्तसमवायस्य नीलग्राहकत्वम् । एवं
यवयवावच्छिन्नचक्षुःसंयुक्तसमवायस्य पीतादिग्राह
वाच्यम् । तथा च षट्कार्यकारणभावापत्त्याऽनिरि
अस्वीकार एवोचित इति वाच्यम् । नीलावयवावच्
नैव चक्षुःसंयुक्तसमवायसत्त्वेऽपि चित्ररूपप्रत्यक्षत्वा
चित्रप्रत्यक्षेऽवयवविजातीयनानारूपप्रत्यक्षस्य चि
त्रावयवविजातीयनानारूपस्य कारणत्वेऽतीवगौरवाप

१ ननु अवच्छेदकतया कार्यतास्वीकारे अत एवैतत्याविना वक्ष्यमाणातिरि
कारणभावद्वयस्वीकारे गौरवापत्तिरित्यरुचेराशयः पूर्वकल्पे अतः पक्षान्तरमाह
२ अन्यथा रूपप्रत्यक्षे संयुक्तसमवायस्य हेतुत्वमिति सामान्यतः कार्यका
स्वीकारे नीलाद्यवच्छेदेन पीतादिप्रत्यक्षापत्तिर्दुर्वारेति भावः ।

ा तादृशनीलपीतादिकं व्याप्यवृत्त्येव । न च पीतकपा-
वच्छेदेन सन्निकर्षे नीलादेः प्रत्यक्षतापत्तिः । नीलादि-
ालावच्छिन्नसंयुक्तसमवायस्य नीलादिग्राहकत्वात् ।
्याप्यवृत्तित्वाङ्गीकारेऽपि तादृशसन्निकर्षस्यैव ग्राहकत्वं
च्यम् । अन्यथा पीतकपालावच्छेदेन सन्निकर्षेऽपि नीले
ुक्तसमवायसत्त्वेन नीलग्रहापत्तिरिति नातिरिक्तं चित्रं
म् । एवमेव चित्रस्पर्शेऽपि साधकं तन्निराकरणं च
ःच्यमिति वदन्ति ।

परे तु समवायघटितस्वाश्रयाश्रयत्वविशिष्टावच्छे-
ता सम्बन्धेन नीलादिकं प्रति समवायसम्बन्धेन नीला-
ेतुत्वमित्याहुः[1] ।

रसत्वजातिमान् रसः । रसत्वजातौ प्रत्यक्षमेव
नम् । न चातीन्द्रियरसे रसत्वजातौ मानाभावः । स-
ायेन विलक्षणमधुरादिकं प्रति स्वाश्रयसमवेतत्वस-
न्धेन मधुरादिरसादेर्हेतुत्वेन मधुरत्वादिजातेरतीन्द्रिय-
माणवादिमधुररसादिवृत्तित्वेन मधुरत्वादिना साङ्क-
ाणापातीन्द्रियरसेऽपि रसत्वस्वीकारात् ।

परे तु रसनेन्द्रियजलौकिकसाक्षात्कारविषया या
ात्वव्याप्या जातिस्तद्वान् रासनलौकिकविषयतावती

---

१ परेस्त्विति । निष्कृष्टमतमेतदिति प्रतिभाति । पूर्वत्रास्वरसस्तु समवायेन
ाात्स्वीकारे अव्याप्यवृत्तित्वस्वीकारपक्षे अव्याप्यवृत्तित्वबलात्कां चित्किं चि:स-
ःम नीलपीताद्युत्पत्तिनियमलाभेऽपि नीलाद्यवच्छेदेनैव नीलादिकस्योनियामकाभावेन
ायापत्तेर्दुर्वारत्वात् । व्याप्यवृत्तित्वपक्षे तु नीलकपालावच्छेदेनैव चक्षुःसंयोगेन सर्वत्र
मस्तीति भ्राम्यतः सर्वत्र नीलमस्तीति शब्दप्रयुञ्जतो वाक्यश्रवणादन्यपुरुषेऽस्य वाक्य-
ाधस्य प्रमात्वापत्तिः । स्वन्मते तत्रार्थबाधाभावात् । सर्वावच्छेदेन सर्वरूपस्य स्वीका-
। न चैवं द्रव्यान्यकारणात्वमवच्छेदकतया रूपस्य प्रसिद्धत्वमित्यनयोरधिकयोः

या गुणत्वव्याप्या जातिस्तद्वान् वा रसः । अत एव र
न्द्रियजन्यप्रत्यक्षे उपनीतरूपत्वादेर्भानेऽपि रूपत्
रासनलौकिकविषयत्वाभावान्न रूपत्वादिकमादाय
व्याप्तिः । गुणत्वमादाय गुणादावतिव्याप्तिवारणाय
त्वव्याप्येति । यद्यपि गुणत्वस्यापि गुणत्वव्याप्यत्वमर
तथाऽपि गुणत्वसमानाधिकरणाभावप्रतियोगित्वं गुण
व्याप्यत्वेन विवक्षितं न तु गुणत्वसमानाधिकरणत्वं स
मादायातिप्रसङ्गात् । न वा गुणत्वाभाववदवृत्तित्वे
गुणत्वभिन्नत्वं गौरवात् । रसनेन्द्रियग्राह्यगुणत्वं तु न
लक्षणम् । अतीन्द्रियरसेऽव्याप्तेरिति वदन्ति ।

स च पृथिवीजलवृत्तिः । मधुरतिक्तकटुकषायाम्ल
रभेदात् षड्विधः । उद्भूतो नुद्भूतश्च । पृथिव्यां पा
ऽपाकजश्च । षड्विधोऽपि पृथिव्यामनित्य एव जले म
ऽपाकजश्च । स नित्यगतो नित्योऽनित्यगतोऽनित्यश्च

ननु मधुरतिक्तावयवारब्धे चित्ररूपोपपादकयु
चित्ररसो दुर्वार इति चेत् ? न । मधुरं प्रति मधुरेतरर
तिक्तं प्रति तिक्तेतररसस्य प्रतिबन्धकतया तत्र मधु
क्तयोरभावः । चित्रस्तु तत्र नाङ्गीक्रियते तत्कल्पने त
गभावध्वंसयोः कल्पने च चित्ररसं प्रत्यतिरिक्तकार
रणाभावकल्पने च गौरवापत्तेः । रसनेन्द्रियेण द्रव्या
चादर्शद्रव्यस्य नीरसत्वे क्षतिविरहात् । मधुरादिप्र
रवयवमधुररसादिनैव चित्रप्रत्ययस्य चावयवविजात
नानारसेनैवोपपन्नत्वात् ।

नन्वेवं परमाणुमधुररसादेरयोग्यत्वेन तेनावयि

षु मधुरादिप्रत्ययोपपत्तेश्चतुरणुकादिप्रभृत्यन्त्यावयवि-
धुररसादौ मानाभाव इति चेत् । न । त्र्यणुकमधुररसा-
न्यथानुपपत्त्या मधुररसादिकं प्रति मधुररसादेर्हेतुत्वे-
न्यत्रापि मधुररसादेर्वारयितुमशक्यत्वात् सामग्रीस-
ादिति प्राञ्चः ।

अन्ये तु परमाणुद्व्यणुकयोरङ्गीकारेऽपि महत्त्ववत्स-
ीतद्रव्यत्वेनैव रसे प्रतिबन्धकतास्वीकारान्न चतुरणु-
दौ मधुराद्युत्पत्तिः सम्भवति । न चैवमतिरिक्तप्रतिब-
प्रतिबन्धकतास्वीकारे गौरवमिति वाच्यम् । अनन्त-
ुरादितत्प्रागभावध्वंसादिकल्पनापेक्षया एकस्य प्रति-
यप्रतिबन्धकभावस्यैव स्वीकारात् । कथमन्यथा रूप
ते रूपत्वेनापि प्रतिबन्धकतासिद्धिः । परमाणुद्व्यणुकयो-
ङ्गीकारे तु पार्थिवत्रुटौ मधुररसादिकं पाकजमेव
त्र्यणुके तु मधुररसादिकं नित्यम् । तथा च मधुरादिकं
ते विलक्षणपाकस्यैव हेतुत्वं स च पार्थिवत्र्यणुके
प्यते नान्यत्र । तथा च त्र्यणुकमधुरादिनैवान्यत्र मधुरा-
प्रत्ययोपपत्तेर्नान्यत्र मधुररसादिसिद्धिः । यदि चान्यत्र
नवाधेन तत्प्रतीतेः प्रामाण्यान्माधुरादिकल्पनं तदा म-
तिरिक्तारब्धेऽपि समानम् । नन्वेवं चित्ररसप्रतीत्या
त्ररसस्यापि सिद्धिः स्यात् । न स्यात् । समानाधिकर-
विजातीयनानारसेनैवोपपन्नत्वात् । एतेन चित्रगन्धो
ाख्यातः ।

गन्धत्वजातिमान् गन्धः । गन्धत्वजातिस्तु गन्धो
ध इत्यनुगतप्रत्ययसिद्धा । यथा विजातीयसौरभे वि-

रणाय गन्धत्वावच्छिन्ने पृथिवीत्वेन हेतुत्वात् । कार्य
वच्छेदकतयाऽपि।तिसिद्धिः ।

कश्चित्तु घ्राणग्राह्यगुणत्वं घ्राणजप्रत्यक्षकारणगुण
वा तल्लक्षणम् । गन्धत्ववारणाय गुणेति प्राह । ता
घ्राणसंयुक्तसमवायस्य रूपादावपिसत्त्वेन तेषां घ्राणज
त्यक्षवारणाय गुणत्वविशिष्टलौकिकविषयतया घ्राणजप्र
क्षे गन्धस्य गन्धसमवेतत्वविशिष्टलौकिकसाक्षात्कारवि
यतया घ्राणजप्रत्यक्षे गन्धसमवेतस्य तादात्म्येन हेतुत्व
न च रूपादेरयोग्यत्वेनैव न घ्राणजं तेषामिति वाच्यम्
तेषामयोग्यत्वेन भेदानां घ्राणजप्रत्यक्षे कारणत्वे गौरव
पत्तेः । यद्वा लौकिकविषयतया घ्राणजभावप्रत्यक्षे गन्ध
नुयोगिकसमवायस्य प्रतियोगित्वानुयोगित्वान्यतरसम
न्धेन गन्धस्य हेतुत्वमिति घ्राणजभावप्रत्यक्षेगन्धस्य हे
त्वमस्तु । तथाऽप्याद्ये परमाण्वादिगन्धाव्याप्तेः । तस्या
न्द्रियत्वात् । द्वितीये घ्राणसंयुक्तसमवेते रूपे सत्तास
वायसन्निकर्षेण सत्ताघ्राणजापत्तेः । घ्राणजलौकिकविष
तयैव गुणत्वव्याप्यजातिमत्परतया तल्लक्षणे घ्राणसंयु
महदुद्भूतगन्धवत्समवेतसमवायस्य हेतुत्वे तु तदपि सम
गिति दिक् ।

स द्विविधः । सुरभिरसुरभिश्च।उद्भूतोऽनुद्भूत
पाकजोऽपाकजश्च सर्वोऽप्यनित्यः । पृथिवीमात्रवृत्तिः
गन्धे सुरभित्वद्वयम् । एकं प्रत्यक्षसिद्धं तत्सर्वसुरभि
निष्ठं सुरभिकारणतावच्छेदकम् । अपरं सुरभिनिष्ठं सु
भिकार्यतावच्छेदकम् । पाककार्यतावच्छेदकमपरम् । पू
सुरभित्वत्रयमिति दिक् ।

। स चतुर्विधः । शीतोष्णानुष्णाशीतचित्रभेदात् ।
द्भूतोऽनुद्भूतश्च नित्यो नित्यः पाकजोऽपाकजश्च । कठिनः
मलश्च । शीतः पयसि । उष्णस्तेजसि । अनुष्णाशीतः
थवीवाय्वोः । पृथिव्यामनित्य एव पाकजोऽपाकजश्च ।
न्यत्र नित्यगतो नित्योऽनित्यगतो नित्योऽपाकजश्च ।
तस्पर्शादयश्च शीतस्पर्शत्वादिजातिमन्तः । ताश्च जात-
प्रत्यक्षसिद्धाः ।

ननु कठिनत्वकोमलत्वयोः संयोगगतत्वेन कठिन-
मलाभ्यामवयवाभ्यामारब्धे कथं चित्रस्पर्शोत्पत्तिरिति
त् । न । तयोः संयोगगतत्वे चाक्षुषत्वापत्तिभयेन स्पर्श-
स्यैवाङ्गीकारेण कठिनकोमलाभ्यामारब्धे चित्रस्पर्शो-
त्तेः । एतस्य सर्वोऽपि विचारश्चित्ररूपवदवसेयः ।

नन्वनुद्भूतस्पर्शादौ मानाभाव इति चेदत्र प्राञ्चः ।
णं रूपरसगन्धस्पर्शादिमत् पृथिवीत्वात्, इत्याद्यनुमानेन
णां सिद्धिः । उद्भूतत्वे तेषां महत्त्वसमानाधिकरणानां
यक्षत्वापत्त्याऽनुद्भूतत्वे एव पर्यवसानमित्याहुः ।

वैशेषिकास्तु, अस्तु पृथिव्यां पाकजं रूपादिकं परन्तु
माणावेव पाकाद्रूपनाशोत्पादौ रूपजन्यजन्यनीलत्वा-
श्याऽसमवेतनीलत्वस्यैव विलक्षणपाककार्यतावच्छेद-
वादसमवेतरूपनाशत्वस्यैव पाकनाश्यतावच्छेदकत्वा-
। घटादिनिष्ठरूपादिनाशे घटनाशादेर्हेतुत्वात् पाकेन
ादौ रूपनाशासम्भवाच्च । कथं तर्हि घटादौ पूर्वरूपादितो
लक्षणरूपादिकं दृश्यते पूर्वरूपाश्रये दृश्यते एव न, किं-
पाकात् परमाणौ क्रिया तथा विभागसंयोगनाशक्रमेण
...

ततः परमाणुक्रियान्तरेण तथैव वा परमाणुसंयोग द्व्यणुकोत्पादादिक्रमेण घटाद्युत्पत्तिः । द्व्यणुकरूपोत्प दिक्रमेण घटान्तरे पूर्वघटसदृशो रूपोत्पत्तिः ।

अत्र प्रसङ्गाद्विचार्यते । द्व्यणुकनाशमारभ्य द्व्य न्तरे एकादशक्षणे रूपोत्पत्तिर्दशमे नवमेऽष्टमे वेति । एकादशक्षणा चैवम् । परमाणौ वह्निसंयोगात् क्रिया परमाणुद्वयविभागः, तस्मिन् क्षणे न परमाण्वाकाश भागः, द्रव्यारम्भकसंयोगनाशकविभागजनककर्मणो व्यानारम्भकसंयोगनाशकविभागजनकत्वनियमात् कसत्कमलकुड्मलादौ तथादर्शनात् । कथं तर्हि परमा काशविभाग इति चेत् । परमाणुद्वयविभागात् कारणा विभागस्य कारणाकारणविभागहेतुत्वात् । परमाणु विभागेन परमाण्वाकाशादिविभागे जननीये द्रव्यन स्तज्जनकसंयोगनाशो वा ऽपेक्षितः । अन्यथा परमाणुद्व भागस्य कर्मतापत्तिः संयोगविभागयोरनपेक्षं कारणं क कर्मलक्षणात् । तत्र द्रव्यनाशापेक्षत्वपक्षे यत्परमाणु येया द्व्यणुकनाशस्तत्परमाणुक्रियान्तरेण द्व्यणुको एकादशक्षणा । संयोगनाशापेक्षत्वपक्षे दशक्षणा । तथा परमाणुक्रिया ततः परमाणुद्वयविभागस्ततः परमाणुसं गनाशस्ततो द्व्यणुकनाशस्ततो द्वितीयक्षणे परमाणुद्वय भागेन द्रव्यनाशापेक्षेण परमाण्वाकाशविभागः परम श्यामनाशश्च ततस्तृतीयक्षणे परमाण्वाकाशसंयोग शपरमाणुरक्तोत्पादौ । ततश्चतुर्थक्षणे परमाणूत्तरदेश योगस्ततः पञ्चमे क्षणे क्रियानिवृत्तिक्रियान्तरजनकसं गो ततः षष्ठे पूर्वक्षणकल्पितकारणेन क्रियान्तरोत्पत्ति

थमे द्व्यणुकारम्भकसंयोगस्ततो दशमे द्व्यणुकोत्पत्तिस्तत
कादशक्षणे द्व्यणुके रूपोत्पत्तिः ।

ननु परमाण्वग्निसंयोगसत्त्वेन क्रियोत्पत्तिक्षणा-
दुत्तरक्षणयोरेव श्यामनाशरूपोत्पादौ युक्तौ न तु द्व्यणु-
नाशोत्तरक्षणतदुत्तरक्षणयोः । न च सर्वावच्छेदेन पा-
स्य कारणत्वेन परमाणुसंयुक्ते परमाणौ सर्वावच्छेदेना-
संयोगाभावान्मूर्त्तयोः समानदेशताविरोधादिति वा-
म् । निविडयोरेव समानदेशताविरोधात् । कथमन्यथा
लोकसंयुक्ते घटादौ चक्षुःसंयोगोत्पत्तिः । न वा सर्वा-
च्छेदेन पाकस्य हेतुत्वं किंतु विजातीयत्वेन । न च
ात्यं तादृशसंयोगत्वनियतं मानाभावादितिचेत् न ।

अविनश्यदवस्थावयविश्यामेऽवयवश्यामेन कालि-
पत्तिसत्त्वात् । द्व्यणुकनाशोत्तरमेव श्यामनाशात् । न
सुचिरमवयवी श्यामोऽवयवाश्च न श्यामा इति । न
मपि द्व्यणुकनाशोत्पत्तिक्षणे परमाणुरूपनाशापत्तिः ।
न्मते समवायेन द्रव्यस्यरूपनाशोत्पत्तौ प्रतिबन्धक-
त् । अन्यथा पाकसत्त्वेन परमाणौ क्रियोत्पादसमये
नाशोत्पत्त्यापत्तेः । न च त्रिक्षणाप्रक्रियानुपपत्तिः ।
शेष्याप्यनङ्गीकारेण तदभिधानात् । यद्वा परमाणुपर-
णुसंयोगस्य विलक्षणसंयोगस्यैव वा प्रतिबन्धकत्वकल्प-
। कारणमात्रविभागस्य संयोगनाशापेक्षस्य विभाग-
कत्वपक्षे द्व्यणुकद्वितीयक्षणे परमाण्वाकाशविभागो-
पा एकक्षणह्रासे दशक्षणा कारणमात्रविभागस्यान-
स्य स्वद्वितीयक्षणे विभागजनकत्वे द्व्यणुकनाशात् ।

रनपेक्षं कारणं कर्मेति कर्मलक्षणात् । कर्मणः संयोग
जनने द्रव्याद्यपेक्षणात् । उत्तरसंयोगजनने पूर्वसंयोगन
पेक्षणाच्च । न च स्वोत्तरभाविभावानपेक्षत्वं तत् । विभ
सहकारिभावानपेक्षितत्वेन सहकारिकल्पनेऽपि वि
ऽतिव्याप्तेर्दुर्वारत्वात् । द्रव्यान्तरक्रियायाः स्वोत्तरोत्प
कस्य घटस्य घटसंयोगजननेऽपेक्षितत्वादव्याप्तेः ।

किंतु कर्मत्वजातिमत्कर्म । तथाचानमेव आरम्
संयोगेत्यादिनोक्तनियमानङ्गीकारे परमाणुद्वयविभ
त्पत्तिसमये परमाण्वाकाशविभागजनने द्व्यणुकनाश
परमाणावुत्तरदेशसंयोगोत्पादादवृक्षणा क्रियावि
योर्विशिष्टकार्यकारणभावात् । अग्रावच्छेदेन क्रिय
वृन्तावच्छेदेन विभागाजनकत्वात् कमलनाशासम्
तादृशनियमाभावात् । यत्परमाणुक्रियया द्व्यणुकना
त्परमाणुक्रियान्तरेण द्व्यणुकोत्पादाभ्युपगमेत्वियता न्यू
सम्भवत्येव । परमाण्वन्तरक्रियया द्व्यणुकोत्पादपत्ते
न्यूनक्षणापि सम्भवत्येव । तथाहि । द्व्यणुकनाशोत्तर
यक्षणे परमाण्वन्तरे द्व्यणुकारम्भानुगुणकर्मचिन्तनात
क्षणा द्व्यणुकनाशस्ततः परमाण्वन्तरे कर्म ततस्तेन वि
गः । ततः पूर्वसंयोगनाशः ततः परमाणोरेतत्परमाणुस
गस्ततो द्व्यणुकोत्पत्तिस्ततो रूपोत्पत्तिः । द्व्यणुकनाशर
परमाण्वन्तरे कर्मोत्पत्तिस्वीकारे षट्क्षणा तत्पूर्वक्षणे कर्म
न्तनात्सप्तक्षणा । तत्पूर्वक्षणे कर्मचिन्तनाच्चतुःक्षणा तत
क्षणे कर्मचिन्तनात्त्रिक्षणा द्व्यणुकनाशसमये परमाण्वो
म्भकसंयोगस्य उभयकर्मजस्य अन्यतरकर्मजस्य वा स्वीक
[illegible]

त्क्रियया परमाण्वन्तरेण सहारम्भकसंयोगाभ्युपग-
। इतो न्यूना न सम्भवत्येव । द्व्यणुकस्य प्रतिबन्धकस्य
र द्व्यणुकान्तरानुत्पत्तेः । द्रव्यं प्रति द्रव्यस्य प्रतिबन्ध-
दित्याहुस्तन्न । घटाश्रवृत्तिर्यो घटादिसमवेतनाशस्तत्र
नाशस्य विजातीयनीलादौ पाकस्य हेतुत्वेन घटाद्या-
परमाणुपर्यन्तेषु पाकादेव रूपादिनाशरूपाद्युत्पत्त्योः
येन घटादीनामनन्तनां नाशाद्युत्पादकल्पने गौरवप्र-
त् ।

ननु पाकेन परमाणौ रूपादि जायते इत्यत्र माना-
इति चेत् । न । पाकेन रसालफलादौ पूर्वरूपादितो
परूपादिकं दृश्यते । न च तत्परमाणौ पूर्वरूपादौ
सम्भवति कारणरूपादिना विलक्षणरूपादिकाले रसा-
दौ पूर्वरूपादौ सजातीयरूपाद्यापत्तेः । अतः पाकेन
यादौ रूपादिनाशोत्पादौ युक्ताविति केचित्
पाकस्य रूपादिजन्यरूपादौ प्रतिबन्धकत्वकल्पने-
नादृशरूपाद्यनुत्पादसम्भवेनानन्तपरमाणुरूपादि-
पाद्युत्पादकल्पने गौरवात् ।
अपरे तु हरिद्रादिभस्मनां हरिद्राद्यारम्भकपरमा-
धत्वम् । हरिद्रादिनाशानुरोधेन तेषु क्रियाविभा-
शसंयोगनाशोत्तरदेशसंयोगानामावश्यकत्वमिति
संयोगेष्वेव भस्मारम्भकवैजात्यं कल्प्यते लाघवान्न
रमाण्वारब्धत्वं भस्मनः तेषु क्रियादिकल्पने गौर-
यथा च हरिद्रादिपरमाणौ भस्मोत्पत्तिकाले पीत-
येन भस्मन्यपि पीतरूपाद्यापत्तिः स्यादतः पाकेन
ा पूर्वरूपनाश

पाक्षुत्पादस्य कल्पनीयः । तदपेक्षया परमाण्वन्त
यादीनां कल्पनैव युक्ता लाघवात् ।

वस्तुतो हरिद्राद्यणुकादिनाशे न मानम् । चा
कादिप्रभृतीनां भस्मान्यनुपलम्भादस्तु तेषां नाशः । प
हरिद्रादिद्व्यणुकेष्वेव पूर्वरूपनाशरूपान्तरोत्पादौ
थैवं परमाणुद्व्यणुकयोः पूर्वरूपसत्त्वे त्रसरेणौ पाका
त्पत्तिकाले द्व्यणुकपीतात्पीतापत्तिः पाकस्य विलक्षण
क्षणपीतादौ प्रतिबन्धकत्वस्यैवकत्वात् । यद्वा द्व्यणु
पीतरूपनाशोऽस्तु त्र्यणुके पाकाद्रूपोत्पत्तिसमय एव द्व
परमाणुरूपाद्रूपोत्पत्तिः रूपजनकपाकस्य द्व्यणुकेऽस्वीक
पाकजरूपोत्पत्तिः । उत्पादकनाशकयोर्भेदाङ्गीकारात्पा
परमाणौ रूपादिनाशे न मानमिति पृथिव्यां रूपादिक
त्यमेवेति नव्यमत एव युक्तिसिद्धं न च प्राचांमते । रूप
चतुर्णामाश्रयनाशनाश्यत्वं क्वचित्पाकनाश्यत्वम् । न
रूपादिनाशत्वावच्छिन्ने नानुगतो हेतुः । दृष्टत्वात् ।
द्रव्यनाशेसमवायिकारणनाशोऽसमवायिकारणनाशश्च
नुगतोऽपि हेतुः । न चैवं द्व्यणुकनाशे कृसत्वाल्लाघवाच्च
योगितया द्रव्यनाशे विलक्षणसंयोगनाशस्य स्वप्रतिये
जन्यत्वसम्बन्धेन स्वप्रतियोगिसमवायिसमवेतत्वसं
नया हेतुत्वम् । न च कपालनाशजन्यघटनाशे व्यभि
कपालनाशानन्तरं कपालसंयोगनाशाभ्युपगमादिति
च्यम् । कपालसंयोगनाशोत्पादकाले घटेऽनन्तसंयोग
ल्पने गौरवोत्पादापत्तेः । अस्मन्मते समवायिकारणस्य
र्थसहभावेन हेतुत्वात्तदा घटस्य विनाशात्र संयोग
कल्पनमिति दिक् ।

न्यं च। यथा नीलमेकं नीलतरमेकं नीलतममेकम्
मरूणादिकमपि। अत एव नीलतरं नीलतममिति प्रयो
ऽप्युपपन्नः। नीलादेरुत्पादविनाशप्रत्ययस्तु तदुपलम्भा
म्भौ। समवायोत्पादविनाशौ वा विषयीकरोतीति वद
। तन्न घटादेरपि नित्यत्वापत्तेः। तदुत्पादविनाशप्रत्य
य तदुपलम्भानुपलम्भविषयत्वेनैवोपपत्तेः। किं च
त्स्य विजातीयनीलत्वादिकमेवकार्यतावच्छेदकं न तु
समवायत्वम्, गौरवात्।

केचित्तु घटो नील इत्यादिप्रतीत्या नीलादेर्घटा
माहुः। तन्न। नीलपीताद्याश्रयस्यैव प्रतीतौ प्रकार
त्। किञ्च तत्तत्समवेतकार्यं प्रति तस्य समवायि
णत्वेनाभेदासम्भवात्।

केचित्तु नीलादेर्घटाभिन्नत्वेन तेषां त्वाचत्वापत्ति
ते। तन्न। इष्टापत्तेः। रूपत्वादेरेव तन्मते चक्षुर्मात्रग्रा
ादिति कश्चित्।

संख्यात्वजातिमती संख्या। संख्यात्वजातिस्तु
त्वद्वित्वादौ संख्यासंख्येत्यनुगतप्रत्यक्षसिद्धा। सा च
व्यम्। असंयोगित्वात्। नापि कर्म। कर्मत्वेनानुभू
ानत्वाभावात्। नापि जात्यादिकम्। जातिमत्त्वात्।
पि रूपादिकम्। तद्विलक्षणत्वेनानुभूयमानत्वात्।
ादतिरिक्त एव गुणः। सा च द्विविधा। व्यासज्य
संख्यासज्यवृत्तिभेदात्। तत्राव्यासज्यवृत्तिरेकत्वम्।
नित्यगतं नित्यमनित्यगतमनित्यम्। तत्र स्वाश्रया
वगतमेकत्वमसमवायि। तच्चाश्रयनाशनाश्यम्।

त्यस्तु तस्य हेतुत्वम् । असमवायिकारणे न
रेकयोरभावादसमवायिकारणं तत्रैकत्वमित्या
कत्वत्वजातिमत् । सा चेदमेकत्वमिदमेकत्वमित
त्यक्षसिद्धा । गुणादावेकत्वप्रत्ययस्तु एकार्थस
अत एव गुणादावेकत्वमस्तु द्रव्ये तत्प्रत्ययस्तु स
मवायित्वेनेति परास्तम् । एतद् घटादिसमवे
त्कल्पनापेक्षया एतद् घटादावेव तत्कल्पनाय
स्त्वात् । न चैकत्रैव तत्कल्पनम् । विनिगमना
गुणान्तरेस्वाश्रयसमवायिसमवेतत्वसंबन्धेन प्रत
यत्वे गौरवापत्तेश्च । न च कार्यद्रव्यगतमप्येकत्वं
ति भवति वाच्यम् । तस्यैकत्वे जातित्वापत्तेः ।
च कार्यसमवेतगुणस्यानित्यत्वनियमादिति कश्चि

व्यासज्यवृत्तिस्तु द्वित्वादिपरार्धान्ता । स
स्यैव । तत्र स्वसमानाधिकरणानि यावदेकत्व
वायिकारणम् । अपेक्षाबुद्ध्यादिनिमित्तकारणम्
बुद्धिनाशान्नाशः परमाण्वादिद्वित्वादेरपेक्षाबुद्धि
रिनाशान्नाशः । अपेक्षाबुद्धेस्तत्राद्वित्वादौ कारणत
द्वित्वादिसमानाधिकरणयावदेकत्वानामेकत्वत्वे
द्विसमबुद्धित्वेन । अत एवायमेकोऽयमेक इत्याव
इदमेकत्वमिदमेकत्वमित्याकारिकया वा समूहा
यथा द्वित्वोत्पत्तिः । एवं त्रित्वोत्पत्तिः त्रित्वा
मये च नानन्तद्वित्वोत्पत्तिरपि, तस्या द्वित्वोत्प
त्वादिति कश्चित् ।

१ कश्चिदित्यस्वरसस्तु लाघवात् कार्यद्रव्यमात्रे ...

अपरे तु तत्र द्वित्वादौ तत्तद्द्वित्वादिसामानाधिक-
ावच्छेदकत्वानामेकत्वत्वेन ज्ञानं हेतुः । त्रित्वोत्पत्तिस-
द्वित्वानामनुत्पत्तिस्त्विष्टैव । अयमेक इमौ द्वौ इति
ध्यां त्रित्वानुत्पत्तिरिष्टैव । तत्समानाधिकरणयावदे-
ानवगाहित्वादित्याहुः ।

अन्ये तु द्वित्वजनकतावच्छेदकमेकमपेक्षाबुद्धौ वैजा-
् । एवं त्रित्वादिजनकतावच्छेदकमपि वैजात्यान्त-
। तच्च द्वित्वजनकतावच्छेदकवैजात्यव्याप्यं सर्वं च
सत्वाव्याप्यम्, अतो न चाक्षुषत्वेन त्रित्वजनकताव-
्कवैजात्यस्य द्वित्वजनकतावच्छेदकवैजात्यस्य वा सं-
अयमेक इमौ द्वाविति ज्ञानात् त्रित्वानुत्पादस्त्विष्ट
। अथवा द्वित्वत्रित्वोत्पत्तौ विजातीयज्ञानस्य हेतु-
ेकत्वत्रयानवगाहिनोऽप्येतादृशज्ञानाद्द्वित्वोत्पत्तिर्जा-
एव । यद्वा । त्रित्वजनकतावच्छेदकं द्वित्वजनकताव-
्कवैजात्यं विरुद्धमेवेति वदन्ति । तन्न । भगवदपेक्षा-
र द्वित्वाद्यनुत्पादापत्तेः । किञ्च घटेषु त्रित्वोत्पादः
ार्द्वित्वोत्पादश्च युगपन्नस्यात् । अयमेकोऽयमेक इति-
मयोर्द्वित्वजनकविजातीयज्ञानस्य विषये पटद्वये द्वि-
त्पादप्रसङ्गाच्च । अत एव घटेषु त्रित्वस्य पटयोर्द्वि-
य युगपदनुत्पादेऽपि न क्षतिः । तत्र पञ्चत्वसंख्याया
त्पत्तेः ।

परे तु एकत्वप्रकारतानिरूपितविशेष्यतया विजा-
ज्ञानं द्वित्वोत्पादकं एवं त्रित्वोत्पादकं तद्विजातीयम् ।
मेक इत्यादिज्ञाने द्वित्वत्रित्वजनकतावच्छेदकवैजात्य-

यम् । तथा च भगवदपेक्षाबुद्ध्या द्वित्वोत्पादाभाव
तिदिक् ।

नन्वीश्वरापेक्षाबुद्धेर्द्वित्वादिजनकत्वे किं मानमि

अत्र केचित् । सर्गाद्यकालीनद्व्यणुकपरिमा
परमाणुद्वित्वोत्पत्तौ भगवदपेक्षाबुद्धिरेव कारणम
रविरहेण तदा जन्यबुद्धेरभावात् । जन्मान्तरी
द्धेराशुविनाशितया तज्जन्यद्वित्वस्यापि तदानीम
किं च त्र्यणुकमहत्त्वं प्रति अवयवगतत्रित्वसंख्य
त्वात्तद्वित्वोत्पादिका भगवदपेक्षाबुद्धिरेव सर्गाद
त्र्यणुकपरिमाणजनकद्व्यणुकसंख्यायाः जन्यापेक्षा
कत्वात् । अत एव परमाणुद्वित्वनाशव्यावृत्तमे
द्धिनाशकार्यतावच्छेदकं वाच्यमन्यथाव्यभिचार
तथा च परमाणुद्वित्वस्य अस्मदादिबुद्धिजन्यत्वेऽ
न्तरेऽनुवृत्तिसम्भवात् । भगवदपेक्षाबुद्धेर्द्वित्वादि
न मानमिति परास्तम् ।

नव्यास्तु द्व्यणुकपरिमाणस्यासमवायिक
न्यत्वमेवास्तु भावकार्यस्यासमवायिकारणजन्य
नाभावात् । तादृशनियमाङ्गीकारेऽपि परमाणु
मेवास्तु तत्रासमवायिकारणम् । न च परिमाण
त्कृष्टपरिमाणजनकत्वनियमेन परमाणुपरिमा
त्वेन तज्जन्यद्व्यणुकपरिमाणस्य ततोऽप्युत्कृष्टत्वाप
णुत्वप्रसङ्ग इति वाच्यम् । तादृशनियमे मानाभा
पत्तेश्च । त्र्यणुकमहत्त्वं प्रचयजन्यमेवास्तु त्रिभिः
भिरेव वा त्र्यणुकोत्पत्तिः । अन्तरा तद्व्यणुके म

जकत्वात् । अन्यथा[1] परमाणोरपि चाक्षुषद्रव्यसमवायि-
त्वाद्यित्वेनानित्यत्वसाधनापत्तिरिति नेश्वरापेक्षाबुद्धे-
स्त्वादिजनकत्वे मानमित्याहुः ।

ननु जन्यापेक्षाबुद्धेरपि द्वित्वादिजनकत्वे किं मा-
: । न चापेक्षाबुद्धिशून्यस्यापि द्वित्वादिप्रत्यक्षापत्ति-
ति वाच्यम् । तस्या द्वित्वादिसाक्षात्कार एव कारणा-
त् । न च द्वित्वादिसाक्षात्कारत्वापेक्षया द्वित्वत्वादि-
त्वापेक्षाबुद्धिकार्यतावच्छेदकं लाघवादिति वाच्यम् ।
न्तद्वित्वादिकल्पनापेक्षया द्वित्वादिसाक्षात्कारत्व-
व कार्यतावच्छेदकत्वादिति । नित्यमेव द्वित्वादिकम-
वति चेत् ? । न कार्यतावच्छेदकलाघवेन व्यक्तिकल्प-
याः स्वीकारात् । द्वित्वत्वादेरेवापेक्षाबुद्धिकार्यतावच्छे-
त्वात् । अन्यथा स्वर्गाद्यन्यसुखत्वादिकमेव शरीरज-
तावच्छेदकमस्तु । तथा च शरीरत्वेन सुखत्वेन च कार्य-
रणभावात्तत्र शरीरकल्पनापि न स्यात् । न च स्वर्गोऽपि
अलौकिककारणजन्यं सुखं तच्च शरीरसाध्यमेवेति
च्यम् । वनितासम्भोगजन्यसुखसजातीयसुखस्यैवादृ-
विशेषजन्यत्वात् । न च स्रक्चन्दनवनितादिजन्यसुखे
जन्यतावच्छेदिका जातयस्तज्जातीयसुखेष्वदृष्टजन्य-
वच्छेदिकास्त्वपरा जातयः कल्प्यास्तदपेक्षया शरीर-
ल्पनैव लघीयसीति वाच्यम् । शरीरतदवयवावयवतत्स-
ारणतत्ध्वंसादिकल्पने च गौरवप्रसङ्गादित्याहुः ।

---

१ यदि च त्र्यणुकमनित्यं चाक्षुषद्रव्यत्वाद् घटवत् । चाक्षुषद्रव्यसमवायित्वाद्
कर्मानित्यं कपालवदित्यनुमानेन त्र्यणुकद्व्यणुकयोरनित्यत्वं [illegible]

अपरे तु अस्तु कार्यतावच्छेदकलाघवं प्रबलम्
चैतावता द्वित्वादेरनित्यत्वम् । द्वित्वत्वादेर्लौकिका
यितया द्वित्वत्वादिप्रत्यक्षनिष्ठस्यैव कार्यतावच्छेदकत्व
न चैवमपेक्षाबुद्धिशून्यस्य द्वित्वप्रत्यक्षापत्तिरनिवा
वेति वाच्यम् । द्वित्वत्वादिप्रत्यक्षातिरिक्तप्रत्यक्षस्य
येन तदतिरिक्तस्यापादनासम्भवाद् द्वित्वत्वादिविषय
च तत्सामग्र्यभावादेवासम्भवात् । अन्यथा घटसामग्री
रहकाले कम्बुग्रीवादिमतोऽप्यापादनस्य महेश्वरवाग्य
शादै। केवलप्रत्यक्षापादनस्य च दुर्वारतापत्तेः ।
घटयोर्द्वित्वप्रत्यक्षकाले पटादिविषयकापेक्षाबुद्धिशून
सन्निकृष्टपटयोर्द्वित्वप्रत्यक्षापत्तिः । कारणवशात् व
तावच्छेदकावच्छिन्नमेवापादनीयं तस्य विद्यमानत्वा
अन्यथा तथापि घटयोरिदानीं द्वित्वोत्पत्तिकाले भा
द्वित्वोत्पादप्रसङ्गः । एवं द्वित्वादिकं सर्वत्रैकमेव, f
च । न चैवं द्वित्वादेर्जातित्वापत्तिः । समवेतशून
सति अनेकसमवेतत्वस्यैव जातित्वात् । यत्र विशेष
यापेक्षाबुद्धिस्तत्र तत्प्रत्यक्षम् । अत एवापेक्षाबुद्धिशून
सन्निकृष्टपटयोर्द्वित्वे चक्षुःसंयुक्तसमवायसत्वेन प्रत्य
पादनमपि निरस्तम् । अथवा तत्तदेकत्वविषयापे
बुद्धेस्तत्तद् द्वित्वमेव विषयितया कार्यतावच्छेदकम् । 
द् द्वित्वाद्यविषयकद्वित्वत्वादिग्रहस्यालीकत्वादेव :
क्षाबुद्धिशून्यस्य द्वित्वत्वप्रत्यक्षापादनं सम्भवत
द्वित्वादिकं नित्यमेवेति वदन्ति ।

परे तु तत्तदेकत्वज्ञानस्य तत्तदेकत्वसमानाधि

यम् । द्वित्वादेरेकत्वान्तरसमानाधिकरणतया तत्प्र- ाभावादेव तत्प्रत्ययासम्भवात् । अत एव परकी- क्षाबुद्धिजन्यद्वित्वादेः पुरुषान्तरं प्रत्ययोग्यत्वकल्प- ा निरस्ता । अत एव द्वित्वत्रित्वयोरेकदोत्पादपक्षे द्वित्वोत्पादप्रसङ्गवारणार्थं प्रागभावस्यासमवायि- णस्य समवायिकारणस्य वा विशिष्य हेतुत्वकल्पना ाप्रस्ता परास्ता । न च द्वौ त्रय इति प्रत्ययापत्तिः । तेऽपि समाधेस्तुल्यत्वात् । अत एव एकत्वस्य सर्व- वे द्वयोरेकत्वमिति प्रत्ययापादनं परास्तम् । द्वयोर्गुरु- दिष्टत्वात् । यथासंख्यातातिरिक्तस्थले द्वित्वान्वयिनी ती व्युत्पत्तिस्तत्रापरपदार्थतावच्छेदकावच्छिन्नान्वयाद् ः शब्द इत्याद्यप्रयोगः । क्षितिपयसोर्गन्धरसौ वित्ति गश्चोपपन्न इति दिक् ।

नन्वागमसिद्धपरार्धसंख्याया अतीन्द्रियत्वेन तत्र ित्वजातौ मानाभावेन परार्धत्वजातिमत्त्वं न सङ्ग- ेति चेत् ।

अत्र केचित् । परार्धं परार्धमित्यनुगतव्यवहारस्यैव ित्वजातिसाधकत्वं प्राहुः ।

अन्ये तु एकत्वादिभिन्नसंख्यात्वं परार्धत्वमि- ादन्ति ।

परे तु स्वोत्पत्तिकालोत्पत्तिकयावत्संख्यासमाना- रणसंख्यात्वं निखिलविद्यमानद्रव्यगतत्वात् परार्ध- ाया: । परार्धं प्रति परार्धस्य प्रतिबन्धकत्वात् पूर्वपरा- ानन्तरमपरपरार्धोत्पत्तिः । तदुत्तरक्षणे तत्परार्धाश्र-

रोत्पत्तिस्तदुत्तरक्षणे तत्परार्धाश्रयद्रव्याणां नाश
क्षणे महाप्रलयः। तत्परार्धोत्पत्त्युत्तरक्षणे क्षणिक
भयेन जन्यभावोत्पत्त्यनङ्गीकारात् तत्परार्धस्य
त्पत्तिकयावत्संख्यासमानाधिकरणत्वेन लक्षण
अन्यपरार्धस्य स्वोत्पत्तिद्वितीयक्षणोत्पन्नसंख्यय
नाधिकरणत्वादव्याप्तेः प्रथममुत्पत्तिपदम्। परा
स्वोत्पत्तिक्षणे नष्टद्रव्यस्य संख्यया समानाधि
दसम्भवपरिहारार्थं द्वितीयमुत्पत्तिपदम्। स्वव्या
रसंख्याकान्यसंख्यात्वं तु न युक्तम्। पूर्वपरार्धे
न्तरोत्पत्तिको यः पूर्वपरार्धाश्रयद्रव्यनाशः, तदु
मानद्रव्याण्यादाय परार्धान्तरोत्पत्तिः, तत्परार्ध
परार्धव्याप्यत्वात्तत्परार्धेऽव्याप्तेः। न च प्रतिलक्ष
स्य नाशोत्पत्तिस्वीकारान्नाव्याप्तिरिति वाच्यम्
भावात्। परार्धस्य द्विक्षणस्थायित्वापत्तेश्च।
द्रव्यनाशस्तदा तदा द्रव्योत्पादस्वीकारेणापि अव
रणसम्भवे सति प्रतिक्षणं द्रव्यनाशद्रव्योत्पाद
मृग्य इति दिक्।

यत्तु स्वव्यापकत्वविजातीयसंख्यान्यसंख्य
क्षणम्। परार्धस्य परार्धव्यापकत्वेऽपि तस्य सज
मित्याहुः। तन्न। परार्धत्वजात्यभावेन तस्यापि
तीयत्वात्। न च स्ववृत्तियावज्जात्यभाववत्त्वं स्व
यत्वम्। परार्धस्यपरार्धवृत्त्योर्यावत्योर्जातयो
दयस्तद्वयोस्तत्सजातीयत्वमेवेति वाच्यम्। मह
दिजातेरप्यभावेन परार्धस्य महापद्मादिसजा
महापद्मादावतिव्याप्तेः। [illegible]

नव्यास्तु एककालीनवस्त्वादिद्रव्येषु द्वित्वाद्यनुत्प-
न्नेषु द्वित्वादिव्यवहारस्तु तत्तत्स्वरूपमात्रविषयक-
विषयत्वेनैवोपपादनीयः । एवं सर्वत्रैव तत्तद्बुद्धिवि-
विषयत्वेनैव द्व्यादिव्यवहारोपपत्तेर्नातिरिक्तसंख्यार्थी
णमित्याहुः ।

परिमाणत्वजातिमत्परिमाणम् । तच्च नित्यगतं
यमनित्यगतमनित्यं संख्यापरिमाणप्रचयजन्यं च ।
माणत्वजातिस्तु परिमाणं परिमाणमित्यनुभवसिद्धा ।
तुर्विधम् । अणुमहद्दीर्घं ह्रस्वं च । अणुपरिमाणं नित्य-
नित्यमनित्यगतमनित्यं चेति द्विविधम् । अनित्यं च
ाणुद्वित्वसंख्याजन्यं तच्च द्व्यणुक एव । नित्यं परमाणौ ।
महत्त्वत्वजातिमन्महत्त्वम् । सा च प्रत्यक्षसिद्धा ।
नित्यमनित्यं चेति द्विविधम् । नित्यं त्वणुद्रव्यत्वेनानु-
सिद्धं दिगादिगतम् । अनित्यं तु त्र्यणुकाद्यन्त्यावय-
तम् । केषु चित् प्रत्यक्षसिद्धं केषु चिद्व्यवणुकादिषु
प्रत्यक्षेऽन्यथानुपपत्त्या सिद्धम् । कार्यमहत्त्वं तु त्रित्व-
यामात्रजन्यं परिमाणमात्रजन्यं संख्यापरिमाणोभय-
ं संख्यापरिमाणप्रचयत्रितयजन्यं परिमाणप्रचयोभय-
ं चेति पञ्चविधम् । केवलप्रचयजन्यं प्रचयसंख्योभ-
न्यं च महत्त्वं नास्त्येव । तथा हि । त्र्यणुकमहत्त्वं द्व्यणु-
त्वमात्रजन्यं कपालादिद्व्यारब्धं घटादिमहत्त्वं स्वा-
कारणपरिमाणमात्रजन्यम् ।

के चित्तु अप्रचितारब्धत्र्यणुकमहत्त्वात्प्रचयारब्ध-
णुकमहत्त्वस्योत्कर्षात्तत्प्रचयमात्रजन्यम् । द्व्यणुकत्रि-

त्वादिति वाच्यम् । अत्यन्तापकृष्टमहत्त्वे प्रचयत्व
धित्वादिति वदन्ति । तन्न । संख्याप्रचयमहत्त्वै
त्वाश्रये संख्यामात्रप्रचयमात्रजन्यमहत्त्वयोर्वा
यवमहत्त्वस्योभयत्र प्रतिबन्धकत्वम् । प्रचयस्य न
मात्रजन्यमहत्त्वविरोधित्वमिति प्रतिबध्यप्रतिब
वत्रयं स्वीकार्यं तदपेक्षया त्रित्वसंख्याजन्यता
जातिविशेषस्य प्रचयमात्रजन्यत्र्यणुकपरिमाणम
जातिव्यापकत्वं स्वीकृत्य तस्याश्चावयवमहत्त्वप्रति
बन्धकतावच्छेदकत्वमस्तु । तथा चैकएव प्रतिबध्यप्रतिबन्ध

वस्तुतस्तु त्र्यणुकमहत्त्वे उत्कर्षापकर्षयोरन
प्रचयमात्रजन्यत्वम् । अत एव संख्याप्रचयोभ
न्यमपि निरस्तम् ।

परे तु त्र्यणुकमहत्त्वं प्रचयजन्यमेव । न च
द्व्यणुके नास्त्येव भूयोऽवयवावच्छेदेनानेकावयवा
वा ऽवयवान्तरासंयुक्ते ऽवयवे द्रव्यजनकसंयोगा
यत्वादिति वाच्यम् । विजातीयसंयोगस्यैव प्रचय
न च द्व्यणुकसंयोगे वैजात्यकल्पने गौरवमिति व
द्व्यणुकेषु त्रित्वसंख्यायास्तत्रेश्वरापेक्षाबुद्धेः का
पाबुद्धिनाशस्य तन्त्रित्वादिनाशव्याप्तकार्यताव
तन्नाशे कारणान्तरस्य च कल्पनापेक्षया द्व्यणुकसंयो
एव कल्प्यते लाघवादित्याहुः ।

केचित्तु त्र्यणुकमहत्त्वं प्रति स्वाश्रयावयव
णुत्वं हेतुरतो न तादृशमहत्त्वेऽवयवमहत्त्वस्य वि
मिति । तन्न । द्व्यणुकेऽपि तादृशमहत्त्वापत्तेः । त
णुत्वेऽपि इतरदादाय बहुत्वसत्त्वात् । स्वाश्रया

स्यतश्चास्तु त्रसरेणोरनित्यत्वपक्षे तन्महत्त्वं प्रति
याणुत्वेन समवेतीयाणुत्वेनासमवेतसमवेतसमवेतद्र-
व्येन वा हेतुत्वम् । न चैवं द्व्यणुकद्वयात् त्र्यणुकोत्पादः
त् । इष्टत्वाद् इत्याहुः ।

प्रचयरहितैरवयवैरारब्धस्य महत्त्वं महत्त्वबहुत्वोभ-
ात्रजन्यम् । प्रचयसहितैस्तादृशैरारब्धस्य महत्त्वं संख्या-
माणप्रचयजन्यम् । संख्यारहिततादृशाभ्यामवयवा-
मारब्धस्य महत्त्वं प्रचयमहत्त्वजन्यम् । तेषु महत्त्वेषु
तण्यानुभवादिति दिक् ।

दिगादिगतं नित्यमहत्त्वं तु परममहत्त्वत्वजातियो-
परममहत्त्वमित्याहुः ।

दीर्घत्वत्वजातिमद्दीर्घत्वम् । तच्च त्र्यणुकमारभ्या-
ायवयविपर्यन्तेष्वेव । सर्वमनित्यम् । तन्महत्त्ववत्पञ्च-
ाम् । अत्र दीर्घत्वं कारणमिति विशेष इति कश्चित् ।

परे तु दिगादावपि परमदीर्घत्वम् । तच्च नित्यम् । न
महत्त्वमेव दीर्घत्वमिति वाच्यम् । तदवधिकमहत्त्वव-
पे तदवधिकदीर्घत्वाव्यवहारादित्याहुः ।

ह्रस्वत्वत्वजातिमद्ध्रस्वत्वम् । तदणुपरिमाणवन्ना-
स्ति । नित्यमनित्यं चाणुपरिमाणवत् । द्व्यणुकमात्रवृत्ति
न्ये ।

तत्र प्रमाणं तु अणुद्रव्यम् अणुव्यवहाराविषयपरि-
ावत् द्रव्यत्वादित्यनुमानम् । त्र्यणुकमहत्त्वे त्र्यणुक-
त्वे च द्व्यणुकाणुत्वे ह्रस्वत्वे च समवाय्यसमवायिनोः
येपि प्रागभावादिनिमित्तभेदाद्भेद इति प्राञ्चः ।

श्चाणुद्रव्येषु महत्त्वाभाववद् द्रव्यत्वनिबन्धनः । म
तत्सद्द्रव्येभ्योऽणुत्व ह्रस्वत्वव्यवहारश्च तत्तत्प्र
दीर्घत्वाभावनिबन्धनस्त्वयापि स्वीकृत एवेति ।

परे तु दीर्घत्वप्रतीतेरवयवसंयोगविशेषेणै
र्न तत्परिमाणम् । अन्यथा वर्त्तुलत्वचतुरस्रत्वादि
माणान्तरतापत्तेः । न चैते महत्त्वविशेषा एवेति
म् । दीर्घत्वेऽपि तुल्यत्वात् । तदवधिकमहत्त्वा
ततो दीर्घत्वप्रतीतिर्न महत्त्वविशेषस्तदिति चेन
वर्त्तुलत्वादावपि तुल्यत्वात् । संयोगस्य निरव
र्त्तुलत्वादौ सावधित्वप्रतीत्या न दीर्घत्वमात्रस्य
णत्वसाधकः सावधित्वानुभवोऽपीति दिक् ।

पृथक्त्वत्वजातिमत्पृथक्त्वम् । सा च प्रत्यक्ष
तदाश्रयश्चास्मादयं पृथगिति व्यवहारेण क्वचित्
च सिद्धः । न चान्योन्याभावेनैव तयोरुपपत्तिः ।
नेत्यप्रतीतेरन्योन्याभावस्य सावधित्वाभावात् ।

अपरे तु अन्योन्याभावेन पृथक्त्वव्यवहारे
नेत्यत्र पञ्चम्याः साधुत्वापत्तिः । अन्यारादिति
रपदसमभिव्याहारात्तथातात्पर्यकेणान्यार्थपदयो
मीविधानात् । यथाश्रुते तु घटात्पृथग्भिन्न इत्यत्रा
मी न स्यात् सूत्रे तेषामनुपादानादिति वदन्ति
सूत्रेण पदविशेषयोगे पञ्चमीविधानात् । कथमन्य
द्यथैदन्येत्यत्रान्योन्याभाववाचकान्यपदयोगे
स्यात् ।

वस्तुतो नञ्पदस्यान्योन्याभाववाचकत्व

तच्च द्विविधम् । एकाश्रितमनेकाश्रितं च । आद्यं
नित्यगतं नित्यमनित्यगतमनित्यम् । द्वितीयमनित्यमेव ।
मेऽनित्ये स्वाश्रयावयवगतमेकपृथक्त्वमसमवायिकार-
[ । द्वितीये समानाधिकरणैकपृथक्त्वानि असमवायि-
रणानि । तद्बुद्धिर्निमित्तकारणम् । तन्नाशान्नश्यति । न
घटौ पटात्पृथगिति प्रतीतेः पटावधिकैकपृथक्त्वद्वयेन
रूपवन्तावितिवत्प्रत्ययोपपत्तेर्न द्व्याद्याश्रिते प्रमाण-
ति वाच्यम् । पटावधिकेनैव व्यासज्यवृत्तिना पृथ-
वेन घटः पटात्पृथगिति व्यवहारोपपत्तेरेकाश्रितेऽपि
णाभावप्रसङ्गात् । तस्मादाश्रयभेदादवधिभेदाच्च पृथ-
भेदो विनिगमकाभावादिति प्राञ्चः ।

परे तु घटावधिकं पृथक्त्वं नैकं सर्वद्रव्ये सम्भवति ।
मेकदाऽभावात् । अतस्तत्तद्द्रव्ये उत्पन्ने तत्तन्निष्ठैकपृ-
त्वे तदितरस्यावधित्वं कल्प्यत इति न व्यासज्यवृत्ति-
क्त्वे मानम् । न चैकदोत्पन्नानन्तद्रव्येष्वेकमेव पृथक्-
त्वावधावस्तेनैव प्रत्येकं तदितरावधिकपृथक्त्वव्यवहा-
पत्तिरिति व्यासज्यवृत्त्यपि दुर्वारमिति वाच्यम् । तेषु
परावधिकपृथक्त्वप्रतीत्या प्रत्येकपृथक्त्वस्वीकाराव-
कत्वान्न व्यासज्यवृत्तेः स्वीकारो गौरवादित्याहुः ।

नव्यास्तु घटात्पृथगिति प्रतीतौ प्रतियोगित्वस्यैव
तेस्तस्याश्चान्योन्याभावेनैवोपपत्तेर्नातिरिक्तं पृथक्त्व-
यत्ता । अन्योन्याभावस्यैव सावधित्वं कल्प्यम् ।
र्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वादित्याहुः ।

संयोगत्वजातिमान् संयोगः । स च घटादिषु प्रत्य-

सर्वद्रव्यवृत्तिः। स द्विधा। कर्मजः संयोगजश्च। कर्म
तावच्छेदकजातिमान् कर्मजः, संयोगजन्यतावच्छेद
तिमान् संयोगजः। न च संयोगकर्मजन्यतावच्छेद
संयोगजातिद्वयकल्पनापेक्षया संयोगजनकतावच्
तया कर्मसंयोगसाधारणी जातिरेव कल्प्यतामिति
च्यम्। गुणत्वेन संकरप्रसङ्गादिति प्राञ्चः॥

अन्ये तु गुणत्वजातेरनभ्युपगमेऽपि तुल्यन्याय
विभागजनकतावच्छेदकतया कर्मविभागसाधारण
सिद्धौ तया संयोगजनकतावच्छेदकजातेः कर्मणि सा
धिकरण्येन संकरान्न संयोगस्य विभागस्य च जनकता
दकतया एकजातिसिद्धिः। न च संयोगस्यापि विभ
नकत्वाद्विभागजनकतावच्छेदकजातेः संयोगसाधा
संकर इति वाच्यम्। विभागं प्रति संयोगस्य वि
हेतुत्वस्यावश्यकत्वात्। अन्यथाऽसंयुक्तेऽपि कर्मणा
गप्रसङ्गात्। एतत्परिहारार्थमेव संयोगस्य विभाग
त्वाङ्गीकारात्। न चासंयुक्ते विभागवारणार्थमस्तु
गस्य विशिष्य विभागजनकता तथापि विभागजनक
च्छेदकजातेः संकरवारणार्थमेव संयोगादित्रितयसाध
कल्प्यतामिति वाच्यम्। संयोगजनकतावच्छेदकजा
विभागादित्रयसाधारण्येन तत्परिहारसंभवात्।

वस्तुतः संयोगस्य स्वसमवायिनि स्वसमवा
मवायिनि संयोगजनकत्वात्कर्मणः स्वसमवायिनि स
मवायिनि संयोगजनकत्वाद्विशिष्यैव तयोः संयोग
कत्वमित्याहुः।

ाग: द्वितीयस्तु यथा सक्रिययोर्मल्लयो: । अन्यतरकर्मो-
कर्मजन्यतावच्छेदकतया सिद्धौ जातिविशेषावेव तयो-
षामिति प्राञ्चः ।

अन्ये तु विजातीयसंयोगं प्रति कर्मत्वेनैव कारणत्वं
त्वात् न त्वन्यतरकर्मोभयकर्मजन्यतावच्छेदकजातिद्वय-
नं गौरवादित्याहुः ।

संयोगजस्तु अवयवानवयवसंयोगादवयव्यनवयवि-
ागः । यथा हस्ततरुसंयोगाच्छरीरतरुसंयोगः । न चैष
क्रियाजन्यः संभवति । तस्याः समवायेनैव संयोगज-
त्वात् कारणैकार्थसमवायेन समवायेन च कर्मणः
णत्वापेक्षया समवायेन संयोगस्यैव हेतुत्वौचित्यात् ।
व यत्र कपालक्रियया कपालान्तरेण भूतलेन च संयोगः
ोयत्क्षणे क्रियानाशघटोत्पादौ ततः कपालभूतलसंयो-
व घटभूतलसंयोगः । तदानीं कपालक्रियानाशादिति
् ।

ननु यत्रावयवक्रियोत्तरक्षणे ऽवयविनि क्रिया
वयवोत्तरसंयोगकाले एवावयविनि पूर्वदेशसंयोग-
ा तदुत्तरकाले ऽवयविन्युत्तरदेशसंयोगस्तस्य संयोग-
ान्यतरजन्यत्वे विनिगमनाविरहः । उभयजन्यत्वे
ङ्कर इति चेत् । अत्र प्राचीनाः । संयोगद्वयमेव तत्रो-
ते विचित्राग्रहस्त्वस्यन्तसादृश्यादिति ।

अपरे तु विचित्र एव तत्र संयोग उत्पद्यते न कर्म-
ः । तत्र संयोगस्य प्रतिबन्धकत्वात् । नापि संयोगजः

अन्ये तु असंयुक्त एव तत्रावयवी संयुक्तोऽवयवा रस्तु अवयवसंयोगेनेति वदन्ति ।

केचित्तु अवयवकर्मोत्पत्तिकालेऽवयविनि कर्मोत्प दस्य कुर्वाणस्तयावयवावयविनोर्युगपदेवोत्तरदेशसंयो योजायमानत्वेन कर्मजन्य एव संयोगः । न च यत्रावे ऽप्युत्पत्तिकाले ऽवयवकर्मोत्पत्तिस्तत्रेदमिति वाच्यम् द्वितीयक्षणे अवयविनि कर्मानुत्पत्तेः । तद्धेतोरभावा त्स्यात् । तन्न । यत्रावयविन उत्पत्तिद्वितीयक्षणेऽवय कर्म तत्र पूर्वक्षणेऽवयविनोऽदनाद्यभावान्न कर्मोत्पत्तिः । तु तदुत्तरक्षणे तत्रावयविसंयोगस्य कर्मजन्यत्वं संयो जन्यत्वं वेति विचारसंभवात् । न चावयविनि स्वोत्पः द्वितीयक्षणे क्रियाऽसम्भवेऽपि तृतीयक्षणे क्रियासम्भ नावयवविभागाद्विभागस्य सम्भवेन चावयवोत्तरदे संयोगकालेऽवयविनि पूर्वदेशसंयोगनाशसम्भवेन तदुत्त क्षणेऽवयविसंयोगस्य संयोगजत्वं कर्मजत्वमिति विचा सम्भवत्येवेति वाच्यम् । अवयविन उत्पत्तिक्षणे तज्ज कसंयोगजनककर्मणो नाशस्य जायमानत्वेन पूर्वमवय कर्मसत्त्वेनावयविन उत्पत्तिक्षणे ऽवयवे कर्मासम्भवात

न चावयविजनकसंयोगस्यान्यतरकर्मजन्यत्वस्वी कारादवयविनोत्पत्तिक्षणनिष्क्रिये कर्मोत्पत्तिः सम्भवती वाच्यम् । तन्मात्रस्वीकारे तच्चतुर्थक्षणे घटकनाशप्रसङ्ग विचारासम्भवात् ।

न च निष्क्रिये कर्मोत्पत्तिरिति वाच्यम् । त त्तरदेशसंयोगकाले घटनाशात् । न चावयविजनकस योगस्य संयोगजस्य स्वीकारान्नोक्तदोष इति वाच्यम्

त्वव्याप्यत्वस्वीकारात् । अन्यथा संयोगजन्यतावि-
दकवैजात्येन सङ्करापत्तेः। न च संयोगजन्यतावच्छेद-
जात्यव्याप्यत्वमेव तस्येति वाच्यम् । व्यणुकजनकसं-
गाभावाभावापत्त्या व्यणुकोत्पत्त्यभावापत्तेः । न
वयविन उत्पत्तिद्वितीयक्षणे अवयवे कर्म तत्र पूर्वक्षणे
वयविनि कारणाभावेन कर्मानुत्पत्तिः किं तु तदुत्तरक्षणे
। अवयविविभागस्य उभयजन्यत्वं अन्यतरजन्यत्वं
न सम्भवतीति वाच्यम् । तत्र समाधेरुक्तप्रायत्वात् ।

विभागत्वजातिमान् विभागः । सा चानुगतप्रत्य-
सिद्धा । स च घटादिषु प्रत्यक्षादतीन्द्रियेष्वनुमाना-
द्धः । न च तदीयसंयोगाभावेन तत्र तद्विभक्तप्रत्य-
पपत्तिरिति वाच्यम् । उत्पत्तिकालेऽपि द्रव्ययोर्विभ-
प्रत्ययापत्तेः । अत एव न तत्संयोगप्रागभावेन । नापि
ागध्वंसेन विभज्य संयुक्तेऽपि विभक्तप्रत्ययापत्तेः ।
च सर्वोऽप्यनित्यः । सर्वद्रव्याश्रितश्च । स द्विधा । कर्मजो
भागजश्च । आद्यो द्विविधः । अन्यतरकर्मज उभयकर्म-
श्च । तादृशसंयोगोदाहरणवदत्रोदाहरणं द्रष्टव्यम् ।
ावयविनः उत्पत्तिद्वितीयक्षणे ऽवयवकर्म तत्र पूर्वक्ष-
वयविनोदनाद्यभावान्न कर्मोत्पत्तिः किं तु तदुत्तरक्षणे
ावयविकर्मोत्पत्त्युत्तरक्षणे ऽवयविविभागस्योभयज-
त्वमन्यतरजन्यत्वं वेत्येवं पूर्वपक्षः। समाधानं च संयो-
द्ग्राह्यमिति दिक् ।

परे तु विभागजोऽपि द्विविधः । एकः कारणाकार-
विभागात्कार्याकार्यविभागः ।अपरः कारणमात्रविभा-

ननु पूर्वसंयोगप्रत्यक्षस्य विभागप्रत्यक्षे हेतुत्वमन्वय-
व्यतिरेकसिद्धम् । पूर्वसंयोगप्रत्यक्षाभावकाले विभाग-
नं तु मानसं पूर्वसंयोगेनानुमित्यात्मकं वेत्युत्तरदेशसं-
गकाले पूर्वसंयोगप्रत्यक्षाभावात्तदुत्तरक्षणे विभागप्र-
क्षासम्भवेनोत्तरदेशसंयोगक्षणे विभागसत्त्वे न मान-
ति चेत् । न । अस्तु तथा हेतुत्वं न तु कार्यसहभावेन
त्वात् । तथा च पूर्वसंयोगनाशोत्पत्तिक्षणोत्पन्नपूर्वसं-
गप्रत्यक्षादेवोत्तरदेशसंयोगोत्पत्तिकालोत्तरक्षणे विभा-
त्यक्षसंभवात् । न च विषयस्य कार्यसहभावेन हेतुत्वं
नाभावात् । तथा हेतुत्वेऽपि न क्षतिः । विभागोत्पत्ति-
लोत्पन्नसंयोगप्रत्यक्षादपि तत्प्रत्यक्षसम्भवात् । न च
थापि कार्यसहभावेन विभागप्रत्यक्षे हेतुता गौरवात् ।
स्तां वा भवदभिमता तथा हेतुता तथापि लाघवाद्वि-
तीयोत्तरदेशसंयोगत्वेनैव विभागनाशकत्वं न तु पूर्वसं-
गनाशत्वेन गौरवादित्युपपादितं पाकजप्रक्रियावसरे ।

केचित्तु हस्तसंयोगः समवायेन हस्तविभागनाशकः
र हस्तविभागोत्तरं न हस्तसंयोगः स विभाग आश्रय-
शनाश्यः हस्तसंयोगज्ञानस्य हस्तविभागप्रत्यक्षे हेतुत्वाच्च
गनाशे तत्प्रत्यक्षम् । न च विभागस्य क्षणिकत्वा-
त्तद्धस्तसंयोगस्य पूर्वं सत्त्वादिति वाच्यम् । कार्यसहवृ-
न एव संयोगस्य विभागनाशे हेतुत्वात् । न च विभा-
त्तरं जायमानहस्तसंयोगस्य क्षणिकत्वापत्तिः समवायेन
विभागत्वेनैव हस्तसंयोगनाशकत्वादिति वाच्यम् ।
यापि कार्यसहभावेन संयोगनाशकत्वादित्याहुः । तन्न ।
माणुपरमाणुविभागस्यानाशापत्तेः । न च तयोः पुनः

अपरे तु तदीयसंयोगत्वावच्छिन्नाभावविशिष्टाश्रय-
[illegible]जन्येन तदीयसंयोगप्रतियोगिकध्वंसेन तद्विभागव्यव-
रोपपत्तेर्नातिरिक्तविभागे मानम् । घटपटान्यतरनाशा-
न्यघटपटसंयोगनाशेन घटपटयोर्विभक्तप्रत्ययाभावे-
श्रयनाशाजन्यत्वं संयोगनाशे विशेषणम् । विभज्य
संयुक्ते विभक्तव्यवहारवारणाय तदीयसंयोगत्वा-
च्छिन्नाभावविशिष्टेति । तावन्मात्रं चेद् गुणादौ द्रव्य-
क्तप्रत्ययापत्तिरित्यग्रिमम् । यथा क्रियाविद्यमानत्वेन
षणं न तु विनाशे आश्रयनाशाजन्यत्वम् । अत
विद्यमानघटे विभज्य पटसंयुक्ते आश्रयनाशाजन्य-
टसंयोगध्वंससत्त्वेऽपि पटनाशोत्तरं न पटाद्विभक्त
व्यवहारः । नापि घटे घटविभक्तव्यवहारः । न च
[illegible]गाभाव एव संयोगोऽस्त्विति वाच्यम् । अनन्तद्र-
[illegible]क्षुषादिकार्येषु द्रव्यचक्षुर्विभागाभावापेक्षया द्रव्य-
संयोगादेरेव लाघवेन हेतुत्वात् । न च विभाग-
द् लाघवेन विभागस्य हेतुत्वात् विभागसिद्धिरिति
यम् । विलक्षणविभागस्यैव शब्दजनकतया तत्प्रयोज-
योगविशेषस्यैव शब्दहेतुत्वाङ्गीकारादित्याहुः ।

परत्वत्वजातिमत्परत्वम् । तत्सिद्धिश्च पर इति
यात् । तद् द्विविधम् । दिक्कृतं कालकृतं च । द्वयमप्य-
म् । अपेक्षाबुद्धिनाशनाश्यं सावधिकं च । आद्यप-
यस्यापेक्षाबुद्ध्या यदवधिकपरत्वोत्पत्तिर्यत्र तत्रावधि-
पितस्वदेशविप्रकृष्टत्वविशिष्टदेशमात्रवृत्तित्वबुद्धि-
मित्तकारणं दिक्पिण्डसंयोगोऽसमवायिकारणम् । एव

च यदवधिकं परत्वमुत्पद्यते तत्पूर्वकालोत्पन्नत्वबुद्धि
निमित्तं कालपिण्डसंयोगोऽसमवायि । अपरत्वे तदुत्तरका
लोत्पन्नत्वबुद्धिर्निमित्तमेतावान् भेदः । तच्च द्वयमनि
द्रव्येष्वेव द्वित्वादिवत्परत्वादेरपेक्षाबुद्धेर्ध्वंसकत्वेनोत्प
कत्वं द्रष्टव्यम् । एतत्तत्त्वं निरूपितं प्रागिति दिक् ।

गुरुत्वत्वजातिमद् गुरुत्वम् । तच्चातीन्द्रियमनुमा
नसिद्धम् । नित्यगतं नित्यमनित्यगतमनित्यमाश्रयना
नाश्यं च । स्वाश्रयावयवगतं गुरुत्वमसमवायिका
रणम् । तच्च पृथिवीजलवृत्ति । संयोगासमवधानकाली
क्रिया गुणासमवायिकारणिका क्रियात्वात् संयोगज
क्रियावदित्यनुमानात् तत्सिद्धिरिति प्राञ्चः ।

अन्ये तु गुरुत्वस्य यावद्द्रव्यभावित्वेन सर्व
क्रियाकारणाय कारणान्तरस्याभावेन प्रतिबन्धकस्य सत्त्व
वेन वा सर्वदा क्रियानुत्पादो वाच्यः । तथा च गुरुत्वे
मानम् । उक्तानुमानस्य च पक्षविशेषणासिद्धिरित्याहुः
एतत्तत्त्वं गुणरहस्यटिप्पण्यां वेदितव्यमिति दिक् ।

द्रवत्वत्वजातिमद् द्रवत्वम् । तच्च द्रवत्वं द्रवत्वा
त्यनुगतप्रत्ययादतीन्द्रियेष्वनुमानात्सिद्धम् । तच्च पृथि
व्यादित्रयवृत्ति । नैमित्तिकं स्वाभाविकं च । तत्र वि
लक्षणतेजःसंयोगजन्यतावच्छेदकजातिमन्नैमित्तिकम् । तत्
तेजोवृत्ति । तच्चानित्यम् । तत्र तेजःसंयोगोऽसमवायि
तच्चाश्रयनाशनाश्यम् । अग्निसंयोगनाशनाश्यं च । द्र
व्यविशेषजनकतावच्छेदकजातिमत् स्वाभाविकम् । त

ननु स्वाभाविकद्रवत्वनिष्ठजातिविशेषस्य जल
न्यतावच्छेदकत्वमेवास्तु लाघवात्[1], न तु द्रवत्वजन्य
वच्छेदकत्वं गौरवात्। न च जलपरमाणौ द्रवत्वापत्ति
परम्परया द्रवत्वस्य कारणत्वे तु परमाणौ तेन संबन्
द्रवत्वाभावादेव न तदुत्पत्तिरिति वाच्यम्। द्रवत्वं प्र
द्रवत्वस्य प्रतिबन्धकत्वादेव तत्र द्रवत्वानुत्पत्तेरिति चे

अत्र प्राञ्चः, भावकार्यस्यासमवायिकारणजन्यत्व
यमेन तद्द्रवत्वस्य द्रवत्वकारणत्वावश्यकत्वे जलस्य
तत्र विशिष्य कारणत्वे गौरवमिति वदन्ति।

नव्यास्तु उक्तनियमानङ्गीकारेण जलत्वेनैव
हेतुत्वम्। यद्वा जलमात्रवृत्तिजात्यङ्गीकारेण तस्या
तत्कारणतावच्छेदकत्वं कल्प्यते। तथा च स्वाभा
द्रवत्वं सर्वं जन्यं जन्यजलमात्रवृत्ति। परमाणुष्वनन्
वत्वानङ्गीकारेण लाघवम्।

अथ वा द्रवत्वविशेषजनकतावच्छेदिका जा
द्व्यणुकादिमात्रवृत्तिस्तज्जनकतावच्छेदकं द्व्यणुकादि
त्रवृत्तिजलत्वं, तज्जनकतावच्छेदकं सकलजलवृत्तित्वे
सतैव सामञ्जस्येऽनन्तद्व्यणुकादिषु द्रवत्वस्वीकारे
वम्। त्वन्मते तु पृथिव्यां स्वाभाविकद्रवत्ववार
विलक्षणद्रवत्वं प्रति विलक्षणद्रवत्वस्य हेतुता वा
तथा च कारणतावच्छेदकतया कार्यतावच्छेदका
च जातिद्वयकल्पने गौरवम्। न च सर्वद्रव
त्तिद्रवत्वत्वेनैव स्वाभाविकद्रवत्वकारणतावच्छेद
न च पृथिव्यां स्वाभाविकद्रवत्वापत्तिः। द्रवत्वोत्पत्

न्तरं द्रवत्वस्य प्रतिबन्धकत्वात्पूर्वं चावयवद्रवत्वाभा
देव द्रवत्वानुत्पादसम्भवादिति वाच्यम्। तथापि पर
णुष्वनन्तद्रवत्वादिकल्पने गौरवापत्तेः। यत्र पार्थिव
यवे नैमित्तिकद्रवत्वोत्पत्त्यनन्तरमवयविन उत्पत्तिः
स्वाभाविकद्रवत्वापत्तेश्च। अवयवद्रवत्वस्य सत्वात्
केचित्तु अग्निसंयोगप्रयोज्यं नैमित्तिकं पृथिवीते
वृत्ति, अग्निसंयोगाप्रयोज्यं स्वाभाविकं तज्जलवृत्ति,
स्वाभाविकत्वं जातिविशेषः प्रमाणाभावात्। तथा च
त्वे जातित्रयम्। तेजःसंयोगजन्यतावच्छेदिका एका, स
वत्वसाधारणी द्रवत्वविशेषजनकतावच्छेदिकाऽपरा,
त्वविशेषजन्यतावच्छेदिकाऽन्या। अत एव द्रवत्ववज्ज
तयोः संयोगेन घृतान्तरोत्पत्तौ अवयवद्रवत्वात्तत्र
त्वोत्पत्तिः। विलक्षणस्वाभाविकद्रवत्वस्वीकारे तु त
ग्निसंयोगकल्पनेन, द्रवत्वजन्यतावच्छेदकजातेः स्व
विकद्रवत्वजन्यतावच्छेदकजातिव्यापकत्वस्वीकारेण
द्रवत्वोत्पत्तिरिति वदन्ति। तन्न। स्वाभाविकद्रवत्व
कतावच्छेदकजात्या सङ्करप्रसङ्गात्।

कश्चित्तु, संग्रहः सक्तुकादीनां संयोगविशेषः
द्रवत्वं स्नेहसहितं निमित्तं, स्पन्दनाख्यक्रियाविशेषे द्र
मसमवायिकारणम्। स्नेहसहितेत्युपादानात् सुवर्ण
द्रवत्वेन संग्रहासम्भवेऽपि न दोष इत्याह। तन्न। स
णुत्वेनैवानतिप्रसङ्गेऽपि द्रवत्वप्रवेशे ग्रन्थीकत्वादेरपि
शापत्तेरिति दिक्।

स्नेहत्वजातिमान् स्नेहः। स प्रत्यक्षसिद्धः। ज
त्रवृत्तिः। नित्यगतो नित्योऽनित्यगतोऽनित्यः। तत्र

धस्तुतो जलेनैव सक्तुकादेर्दृढतरसंयोगो जायते न
रादिनेति तादृशसंयोगविशेषे जलसंयोगविशेषस्य संयो-
शेषेण जलस्यैव वा हेतुत्वात् प्रत्यक्षस्यापामरसाधार-
ाभावाच्च स्नेहसिद्धिरिति दिक् ।

एवं प्रकृष्टस्नेहो दहनानुकूलः । स च तैलादौ विद्य-
जलमात्रनिष्ठः । अप्रकृष्टश्च प्रसिद्धजलगतो दहनवि-
ीति निरस्तम् । कर्पूरादिद्रव्यस्य कर्पूरत्वादिनैव दह-
कूलत्वाज्जलत्वेनैव दहनविरोधित्वाच्चेति दिक् ।

संस्कारत्वजातिमान् संस्कारः । मूर्तामूर्तवृत्तिका-
त्यवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमान्वा । शब्दजनक-
च्छेदकसंयोगविशेषगतजातिवारणाय गुणत्वसाक्षा-
येति । स त्रिविधः । वेगो भावना स्थितिस्थापकश्चेति ।

तत्र वेगत्वजातिमान् वेगः । स च मूर्तवृत्तिः
जः कर्मजनकश्च । कश्चिदवयववेगजन्यश्च । स च विल-
संयोगात् कश्चिदाश्रयनाशाद्विलक्षणकर्मणा च नश्यति ।
ननु क्रियातिरिक्तवेगे किं मानमिति चेत् ?

अत्र केचिद्वेगेन चलतीति प्रत्ययात्तत्सिद्धिमाहुः ।

अन्ये तु युगपत् प्रक्षिप्तनाराचयोः शीघ्रगामित्वं
गामित्वं वेगकृतम् । तथा हि किं चित् कर्म सन्निकृ-
शसंयोगजनकं किं चिच्च दूरदेशसंयोगजनकमिति कर्मणि
लक्षण्यं कारणवैलक्षण्याधीनम् । अतो दूरदेशसंयोगजन-
िलक्षणं कर्म विलक्षणवेगजन्यं यस्येषोः स शीघ्रं गच्छ-
। यस्य तु सन्निकृष्टदेशजनकं तद्विलक्षणं कर्म विलक्षण-
जन्यं स मन्दं गच्छतीति वदन्ति ।

ततः कर्मनिवृत्तिः, ततः पूर्वोत्पन्नवेगात्कर्म, ततस्तत्
स्वजनकवेगनाशः स्वाश्रयविभागश्च, ततः पूर्व
शवेगौ, तत उत्तरदेशसंयोगः, ततः कर्मनिवृत्तिः,
त्पन्नवेगात्कर्म। कर्मणः समवायेन कर्मोत्प
त्वाच्च वेगद्वितीयक्षणे कर्म। एवं वेगं प्रति स
प्रतिबन्धकत्वाच्च वेगद्वितीयक्षणे वेगः। एवं च
ल्येन क्रियाबाहुल्यं स दूरदेशगामी। यत्र वेग
क्रियास्वल्पता स निकटदेशगामीति। न च
हुल्यं कुतो नेति वाच्यम्। विलक्षणकर्मण
त्वात्तस्य च तत्राभावाद्वेगानुत्पत्तेः, साधर्म्य वेग

यत्तु कर्मणा वेगः, तेन पूर्वकर्मनाशः
त्तिः पूर्वदेशसंयोगनाशश्च, तेन कर्मणा वेगः पूर्व
मुत्तरदेशसंयोगोत्तरमेव पूर्वोत्पन्नकर्मणा वि
यन्यूनतया कर्मोत्पत्तिः सप्तमे क्षणे उत्तरदेश
त्तरदेशसंयोगसम्भवाच्छीघ्रगामित्वम्। य
गात् पूर्वकर्मनाशः " तत्क्षणे क्रियाजनकसंयो
तदुत्तरक्षणे कर्म; तेन स्वोत्तरक्षणे विभागः,
उत्पत्त्युत्तरमेव नवमे क्षणे उत्तरदेशसंयोगा
तत्र क्षणत्रयविलम्बान्मन्दगामित्वम्। कर्मवि
जनकत्वाच्च सर्वकर्मणा वेगोत्पत्तिः। कर्मवि
वेगस्य हेतुत्वाच्चोत्तरसंयोगजन्यकर्मनाशे
हुः। तन्न।समवायेन कर्मोत्पत्तौ समवायेन
धित्वेन वेगोत्पत्तिद्वितीयक्षणे कर्मानुत्पत्तेः।
प्रति वेगस्य प्रतिबन्धकत्वेन कर्मोत्तरक्षणे वेगा

कर्मणो विरोधित्वं न कर्मत्वावच्छिन्न इति वाच्यम्। वेग
कर्मिककर्मद्वयोत्पादप्रसङ्गात्। इष्टापत्तौ गौरव
बाधकम्। किंच कर्मोत्पत्तिद्वितीयक्षणे विभागो वेगश्च
पूर्वदेशसंयोगनाशक्षणे कर्मनाशस्तेन कर्मणा चोत्तरदे
संयोगाजननात्किमर्थं प्रथमकर्मस्वीकारः ? अथ वेगोत्पा
द्वितीयक्षणे पूर्वकर्मणा पूर्वसंयोगनाशजननात्तत्क्षणोत
त्कर्मणा पूर्वसंयोगनाशोत्तरक्षणे उत्तरदेशसंयोगो वेग
गेन पुनः कर्मविभागः पूर्वकर्मनाशश्च।

"ननु पूर्वकर्मणा तदानीं विभागः विभागं प्रति का
सवृत्तित्वेन कर्मणो हेतुत्वात्। अन्यथोत्तरदेशसंयोग
नन्तरं विनश्यदवस्थकर्मणा विभागोत्पत्त्यापत्तेः" ततस्
वेगः पूर्वदेशविभागश्च, एवं क्रमेण यत्र वेगक्रियाबाहुल
तत्र दूरदेशगामित्वं यत्र क्रियावेगयोः स्वल्पता त
सन्निकृष्टदेशगामित्वमिति चेत्? न। क्रियायां वेगना
नावच्छेदकस्योत्तरदेशसंयोगनाश्यतावच्छेदकस्य च वैज
त्यस्य कल्पने क्रियावेगयोः प्रतिक्षणमुत्पादविनाशकल
व गौरवापत्तेः। उत्तरदेशसंयोगानन्तरं विनश्यदवस्थ
र्मणा विभागोत्पत्तिवारणाय विभागं प्रति कर्मणः कार्य
सवृत्तित्वेन हेतुत्वेन विनश्यदवस्थकर्मणा विभागासम्भव
एतेनोक्तप्रतिबध्यप्रतिबन्धकभावस्वीकारेऽपि क्रिया, त
वेगविभागौ, ततः क्रियानाशसंयोगनाशौ, ततो वेगात्क्रि
ततो वेगनाशोत्तरदेशसंयोगौ, ततः क्रियातो वेगविभा
ततः कर्मनाशपूर्वसंयोगनाशौ, ततः कर्म, तत उत्तरदेशसंये
एवं क्रमेण यत्र वेगक्रियाबाहुल्यं तत्र दूरदेशगामित्वं, त

वेगक्रियास्वल्पतां तत्र संनिकृष्टदेशगामित्वा
परास्तम् ।

नव्यास्तु संस्कारत्वजातौ न मानम् । अत ए
यदितोत्कलक्षणमपि निरस्तम् । किं च मूर्तमू
वृत्तिकालवृत्तिजातिमात्रस्यैव सम्यक्त्वेन शेषवैयर्थ
जनकतावच्छेदकजातेः शब्दनिमित्तकारणसंयोगे
रेण तस्या अमूर्तवृत्तिवृत्तित्वाभावात् ।

यच्चोक्तं दूरदेशवृत्तिसंयोगजनकविलक्षण
कतया वेगसिद्धिः। तदपि न । विलक्षणवेगजनकक
चिरकालस्थायितया दूरदेशसंयोगजनकत्वमस्तु वि
एवं विलम्बगामित्वस्यापि विलक्षणकर्मणैवोत्पर
वेगेन ? यत्र विलम्बगामिनि द्रव्यान्तरक्रियाजन्य
उत्तरदेशसंयोगप्रतिबन्धका विभागादेरुत्पत्तिसम
कल्प्यन्ताम्, ततएव तस्य विलम्बगामित्वमिति किं
अत एव युगपत्प्रक्षिप्तनाराचयोः कस्य चित् सन्नि
मित्वेन कस्य चिद्विप्रकृष्टदेशगामित्वेन वेगसिद्धिर
स्ता । तत्तत्क्रियाया एव फलबलेन तत्तद्देशसंयोगज
कल्पनायां किमनन्तवेगादिक्रियादिसन्तानकल्पनयेति

अपरे तु यत्रो ...रदेशसंयोगोत्पत्त्युत्तरक्षणे
न्तरजनकसंयोगकल्पना तत्र शीघ्रगामित्वं त
देशसंयोग एव वा क्रियाजनकतावच्छेदकधैजात्य
नां तत्र शीघ्रगामित्वं तदुत्तरोत्तरक्षणे । यत्र क्रिया
नेकसंयोगकल्पना तत्र न मन्दगामित्वम् । एवं यत्र
रतृतीयक्षणे क्रियान्तरजनकसंयोगकल्पना तत्र त
मन्दगामित्वसम्भवात् किं वेगेनेत्याहुः ।

रत्वजातिसिद्धिः । तथा हि । वेगः कर्मजन्यः कर्मसजा-
यजनकः । एवं भावना ज्ञानजन्यज्ञानसजातीय-
तिजनिका, स्थितिस्थापकोऽपि क्रियाजन्यः तज्जन्य-
यान्तरजनकश्चेति निरस्तम् । शब्दस्यापि शब्दजन्य-
। तत्सजातीयशब्दजनकत्वात् तत्रापि तादृशका-
नासत्त्वेन संस्कारत्वसत्त्वापत्तिरिति वदन्ति ।
वनाख्यस्त्वात्मविशेषगुणः । आत्ममात्रवृत्तिरनुभव-
यः स्मृतिजन्यश्च । स्मृतिजनकतावच्छेदकजातिमान-
य एव, तस्य च क्वचित् समानप्रकारिका स्मृतिः, क्व-
ह्वेराभिज्ञानं, क्वचिन्मदः, क्वचित्तीव्रदुःखं, क्वचित्का-
व नाशकः । तस्यात्ममनःसंयोगोऽसमवायी । स
भ्यासादरप्रत्ययाभ्यां दृढतर उत्पद्यते सादृश्यदर्शना-
नुचिन्तनाद्यन्यतमसहकृतः स्मृतिहेतुः । न चातीन्द्रियसं-
रे मानाभावः स्मृतिस्त्वनुभवध्वंसव्यापारकानुभवा-
त्पद्यते इति वाच्यम् । अनुभवस्य कारणीभूताभाव-
योगित्वेन स्मृतिप्रतिबन्धकत्वापत्तिरिति प्राञ्चः ।

अपरे तु कारणीभूताभावप्रतियोगित्वं न प्रतिबन्ध-
म् । दण्डाभावस्य कारणीभूतस्वाभावात्मकदण्डप्रति-
गित्वेन घटप्रतिबन्धकत्वापत्तेः, किं तु यदभावत्वेन
कारणत्वं तत्त्वं तस्य प्रतिबन्धकत्वम् । दण्डाभावाभा-
वेन न घटकारणता गौरवात् दण्डध्वंसादपि घटाप-
; किं तु दण्डत्वेन । एवं च स्मृतौ नानुभवाभावत्वेन
। अत्यन्ताभावेनापि स्मरणापत्तेः । किं तु ध्वंसत्वे-
नानुभावस्य प्रतिबन्धकत्वम् । न चानुभवध्वंसस्य

वारं दर्शने सति देवदत्तस्य दशवारं स्मरणं
त्तज्ञानत्वेनैव देवदत्तस्मरणे कारणताकल्पने त
पश्चाच्च यज्ञदत्तज्ञानेऽपि सति न देवदत्तस्मर
देवदत्तस्मरणादिना तस्य संस्कारस्य नाशाम
भवन्मते च दशयज्ञदत्तज्ञानानां दशसु देवद
तत्त्वज्ञानत्वेन हेतुत्वे दशकार्यकारणभावकल
मिति वाच्यम्। एतावता स्थलविशेषे संस्का
सर्वत्र तस्यासिद्धेः। किं च संस्कारस्य तद्ध्वंसे सं
वस्य संस्कारनाशे च स्मृत्यादेः कारणत्वस्य च स
संस्कारस्य प्रतिबन्धकतायां अनन्तसंस्कारा
नापेक्षया यज्ञदत्तज्ञानेष्वेव देवदत्तस्मरणजनकत
धर्मस्यैव कल्पनाया उचितत्वम्। न च तस्य वि
त्वे तदवच्छिन्नं प्रति अनुगतं कारणं वाच्यमिति
वाच्यम्। घटनिर्विकल्पकोत्तरं घटत्वविशेष्यक
ज्ञानानङ्गीकारपक्षे तत्तद्विशेषणज्ञानत्वेनैव त
बुद्धौ जनकत्वेन तत्तज्ज्ञानजन्यासु यज्ञदत्तत्सबु
स्वीकारेण तादृशविषयताशालि वावच्छिन्ने क
ना हेतुत्वे ऽप्यक्षतेः। तत्तद्यज्ञदत्तज्ञानातिरिक्त
ताशालिज्ञानस्याभावाच्च तदनन्तरं तदापादन
नात्मकं तु तत्तज्ज्ञानकारणज्ञानाभावादेव न
अस्तु वा स धर्मः शक्तिवन्नित्य एव, स्वीक्रिय
रणत्वेन रूपसामान्याभाववत् कारणताव
तत्तज्ज्ञानभिन्नत्वावच्छिन्नभेदः, मास्तु वा तदव
कारणत्वाङ्गीकारोऽपि, कार्यमात्रवृत्तिजातेरेव
णजन्यतावच्छेदकत्वमिति दिक्।

व्याप्यजातिविशेषवानतीन्द्रियः । नित्यगतो नित्यो
त्यगतोऽनित्यः कारणगुणपूर्वकश्चेति कश्चित् ।

परे तु स क्रियाविशेषजन्यःकारणगुणजन्यः क्रिया-
शेषे हेतुश्च । न च वेगादेव धनुःशाखादौ क्रियासम्भ-
त् किं तेनेति वाच्यम् । वेगस्य स्वदेशान्तरदेशसंयोग-
कक्रियाजनकत्वं बलादुन्नमितधनुःशाखादिक्रिया तु
श्रयस्य यथापूर्वसंयोगजनिका विलक्षणा विलक्षणं का-
कल्पयति तदेव तादृशजातिमदिति प्राञ्चः ।

अपरे तु कारणगुणपूर्वकस्य स्थितिस्थापकस्य द्रव्यो-
द्वितीयक्षण एवोत्पादात् सर्वदा तादृशक्रियापत्तेर्न
मानम् । न च क्रियात्वव्याप्यजात्यवच्छिन्नं प्रति तस्य
रणत्वात् सर्वदा क्रियासामान्यकारणाभावान्न तदुत्पाद
ते वाच्यम् । वेगादिना धनुषि क्रियोत्पादकालेऽपि तादृ-
क्रियोत्पादप्रसङ्गात् । कथं तर्हि विलक्षणा क्रिया न कथं
त् क्रियासामान्यकारणवशाज्जायमाना क्रिया क्रिया-
योगयोर्विशिष्यैव कार्यकारणभावस्याङ्गीकारात्तत्तद्देश-
योगं जनयतीति वदन्ति ।

श्रोत्रग्राह्यगुणत्वव्याप्यजातिमान् शब्दत्वजातिमा-
शब्दः । स प्रत्यक्षसिद्धः ।

केचित्तु आकाशविशेषगुणत्वं ज्ञानासमानाधिकर-
विभुविशेषगुणत्वं वा तल्लक्षणमाहुः ।

स द्विविधः । वर्णात्मकोऽवर्णात्मकश्च । तत्राद्यस्य
ल्वादिना आकाशसंयोगोऽसमवायी । ताल्वादिना वा-
भिघातो निमित्तं वर्णात्मकद्वितीयादेस्तु पूर्वशब्दो

वायुसंयोगान्निमित्तात्कुण्डलाद्याकाशसंयोगासमवायि कारणादुत्पद्यन्ते । द्वितीयादयस्तु पूर्वपूर्वशब्द समवायिकारणादिकाः । सर्वोऽपि शब्दोऽनित्यः 'अन्त्यादन्यः कार्यशब्दनाश्यः । अन्त्यस्तु उपान्त्याद न्त्यनाश्याः नश्यति । अन्त्याः सर्वोऽपि श्रोत्रग्रा विभागजानामाद्यानां तु वंशादिदलद्वयविभागो नि त्तम् । दलाद्याकाशविभागोऽसमवायिकारणम् । न अपि दलाकाशसंयोगो वाय्वाकाशसंयोगो वाऽसम यिकारणमस्तु, किं विभागेनेति वाच्यम् । तयोः पूर्व त्वेन शब्दानुत्पत्तेर्विभागस्यैवासमवायित्वात् । द्विती दयः पूर्वशब्दाद्यसमवायिकारणादिकाः

कर्णशष्कुलीविवरावच्छिन्नं नभः श्रोत्रं शब्दग्रा कमतो न देशान्तरवृत्तिशब्दग्रहः । यदा यः शब्दो यत र्णावच्छिन्नः स तेन गृह्यते । अत एव भेर्यादिशब्दोत्पन्न ब्दानां कर्णावच्छिन्नत्वाभावेन ग्रहणासंभवाद्वीचीतर न्यायेन कदम्बगोलकन्यायेन वा शब्दोत्पत्तिस्वीकारा कर्णावच्छेदेनोत्पन्नो गृह्यते भेरीशब्दो गृह्यत इति धीभ्रान्ति व; किं तु भेर्यादिप्रयोज्य एव गृह्यत इति प्राञ्चः ।

परे तु भावकार्यत्वस्यासमवायिकारणजन्यत्वव्य प्यत्वे मानाभावेन भेर्यादिदण्डादिसंयोगान्निमित्तका णासहकृतादाकाशादेव शब्दस्योत्पत्तौ भेर्याद्याकाशसंयो गजन्यत्वे मानाभावः । न च भेर्याद्याकाशसंयोग ए का णमस्तु; किं भेरीदण्डसंयोगेनेति वाच्यम् । तस्या न्वयव्यतिरेकाभ्यां हेतुत्वात् । न च शब्दस्य नित्यत्वमे गस्तु भेर्यादिसंयोगादिकं तद्व्यञ्जकं [illegible]

दिनन्तशब्दोत्पादकल्पनात् । न च स एवायं शब्द इति
त्ययादभेदे सिद्धे बहुकालस्थायित्वसिद्धा शब्दस्य शब्दा
स्थत्वसिद्धौ अन्यस्य नाशकस्याकल्पनान्नित्यत्वमिति
च्यम् । तदेवेदमौषधं सेयं दीपकलिकेतिवत् प्रत्य
भज्ञायास्तज्जात्यवच्छिन्नभेदाभावविषयत्वात् । न च
त्सजातीयोऽयमिति स्यात् यत्र तद्व्यक्तिभेदाभावे
षयस्तत्रैव स एवायमिति प्रत्यभिज्ञानादिति वाच्यम्
वौषधयोरौषधयोर्भेदज्ञानकालेऽपि तदेवौषधमिति प्र
भिज्ञानात् । अत एव यत्र व्यक्तिभेदज्ञानं तत्र तज्जा
यमिति प्रत्यभिज्ञेत्यपि निरस्तम् । कथं तर्हि गकारे
यं स एवायं गकारजातीयोऽयमिति विलक्षणा विलक्षण
त्यभिज्ञा । इत्थं यत्र गकारे गत्वं स्वरूपेण भासते त
कारोऽयं, यत्र गत्वे गवृत्तित्वं भासते तत्र स एवायं,य
त्वे जातित्वं तत्र गकारजातीयोऽयमिति वदन्ति ।

अन्ये तु प्रत्यभिज्ञानादेकैका एव गकारादयो
नित्या अजन्याश्च । तदुत्पादकत्वाभिमतसामग्र्यास्तु
प्रत्यक्षजनकत्वाङ्गीकारोन्न सर्वदा तत्प्रत्यक्षम् । उत्पा
विनाशप्रत्ययस्तु भ्रान्त एव । अन्यथानन्तशब्दाङ्गीका
रवापत्तेः । अत एवोत्पादविनाशप्रत्यययोरुभयोरप्रमा
वकल्पनापेक्षया प्रत्यभिज्ञाया एवाप्रमात्वकल्पनमिति
निरस्तम् । न च तारत्वमन्दत्वविरुद्धधर्माभ्यां गकार
योर्भेदः तयोरन्यनिष्ठत्वात् । अस्तु वा तारतमादि
भेदेन मन्दतमादिभेदेन नानात्वमात्रम् । अस्तु वा त
त्वमन्दत्वयोरविरोधः । य एव तारः स एवान्यापेक्ष

न्ध्यसैया दिकल्पनापेक्षया तस्य प्रामाणिकत्वात् । अत एव
ादात्म्येन तत्सत्कर्णावच्छिन्नशब्दस्यशब्दविशिष्टतौ किंक-
ाषयतया तदीयश्रावणप्रत्यक्षे हेतुत्वं न । किं तु तत्सत्क-
स्यैव तेन तेन गृह्यमाणशब्देऽवच्छेदकत्वं कल्प्यते न तु
ीचितरङ्गन्यायेन कदम्बगोलकन्यायेन वा शब्दोत्पादो
ारवात् । भेर्यादिशब्दः श्रुत इति धीः प्रमैवेति निरस्तम्।
नन्तगकारादीनां तद्ध्वंसानां च कल्पने गौरवापत्तेः । न
घटादिजनकसामग्र्याः घटादिप्रत्यक्षहेतुत्वमेवास्त्वि-
ति वाच्यम् । घटाद्युत्पादानन्तरमपि घटादेः केषांचित्प्र-
त्यक्षभिन्नसामग्र्या चक्षुष्ट्वादिस्याहुः । तन्न क्रिया
ोयोगयोर्वैशिष्ट्यैव कार्यकारणभावस्यावश्यकतया तत्स-
चक्षुःसंयोगाद्यवच्छिन्नघटादेस्तत्तद्घटादिचाक्षुषे हेतु-
ासंभवेन घटादेरपि नित्यत्वापत्तेः । उत्पादविनाशप्रत्य-
स्य प्रत्यभिज्ञायाश्चोभयत्र तुल्यत्वादिति दिक् ।

सुखत्वजातिमत्सुखम् तच्च धर्मासाधारणकारणकम् ।
न्यसाक्षात्कारविषयताव्याप्यजातिमदात्मविशेषगुणः ।
ुणद्वयस्थायि । स्रक्चन्दनवनितादिना शरीरसंयोगाभि-
म्सात्क चित् ज्ञानादिरूपाभिमित्ताकुत्पद्यते । धर्मस्यापि
ुत्पादनद्वारा हेतुत्वम् । आत्ममनःसंयोगस्तत्रासम-
ायी । तच्च द्विविधम् । वैषयिकं मानोरथिकं च । वैष-
यिके स्रक्चन्दनवनितादिसंयोगो निमित्तम् । मानोर-
थिके ज्ञानं निमित्तम् । सर्वमनित्यमेव । न चेश्वरे सुखत्व-
ितिपादकागमबलात्तस्य नित्यत्वमपि वाच्यम् । धर्मत्वेन
ुखत्वेन कार्यकारणभावात् । ईश्वरे सुखाभावेन तत्प्र-
ितपादकस्यागमस्यौपचारिकत्वात् । न च ज्ञानत्वेन शरी-

नप्रतिपादकागमोऽप्यौपचारिक एवास्त्विति वाच्यम् ।
श्वरस्य कर्तृत्वेन सिद्धस्य नित्यज्ञानवत्त्वेनैव सिद्धेः ।
ान्यज्ञानत्वादिकमेवात्ममनःसंयोगादिजन्यतावच्छेदक
ल्प्यते । किं चेश्वरसुखाभेदप्रतिपादकस्यैवागमस्य सत्त्वा
स्यौपचारिकत्वस्य गुणगुणिनोरभेदानङ्गीकारेणावश्य
ःवमेवेति दिक् ।

दुःखत्वजातिमद् दुःखम् । तच्चाधर्मासाधारणकारण
म् । तच्च साक्षात्कारविषयताव्याप्यजातिमदात्मविशे
गुणः । तच्चानित्यमेव सुखवत् । वैषयिकं मानोरथिकं च
ण्टकादिसंयोगविशेषनिमित्तोत्पन्नं वैषयिकम् । व्याधा
ज्ञाननिमित्तोत्पन्नं मानोरथिकम् । क्षणद्वयस्थायि । उत्त
त्पन्नगुणनाश्यत्वात् । ननु स्वोत्तरोत्पन्नस्य स्वनाशकत
श्यं वाच्या । अन्यथा स्वस्याप्यन्यापेक्षयोत्तरत्वेन क्षणि
त्वापत्तिः । उत्पत्तिपदं च स्वस्यापि स्वोत्तरत्वेन स्वनाशक
ापत्त्या क्षणिकत्वापत्तिवारणायेति स्वत्वघटितत्वादनु
तता । तथा च यत्र रोगाद् दुःखं धारारूपेणानुभूयते तत्र
न्तदुःखस्वीकारे गौरवात्तावत्कालमेकमेव दुःखमस्तु
त्र स्वोत्तरोत्पन्नस्य स्वोत्तरोत्पन्नत्वेन स्वोत्तरवृत्तित्ववि
शेषत्वेन वा नाशकताया अकल्पनात् । यत्क्षणे नश्यति
ाक्षणपूर्वक्षणोत्पन्नायास्तद्व्यक्तित्वेन तत्र नाशकताकल्प
ात् । अत एव शतवर्षपर्यन्तमेकमेव दुःखमस्तु एवमेव सु
पि चेत् । न । यदा तद्दुःखोत्पत्तिस्तदान्येषामपि दुःखा
ात्पद्यन्ते । तेषां चतुर्थादिक्षणेऽसत्त्वात्तृतीयक्षणे नाशो वा
च्यः । तदनुरोधेन तत्क्षणोत्पन्नदुःखनाशत्वावच्छिन्नं प्र

त्पन्नदुःखनाशसाधारणं वाच्यमित्यर्थात् तत्क्षणोत्प न्नदुःखादेः क्षणद्वयस्थायित्वात् । न चैवं तत्क्षणानाम नन्त्यात्तत्तत्क्षणभेदादनन्तकार्यकारणभावस्वीकार वाच्यम् । इष्टत्वात् । तथापि त्रिक्षणस्थायिसुखादि तत्तत्क्षणोत्पन्नव्यक्तीनामिव विनिगमनाविरहेण त्क्षणानामपि हेतुत्वेन क्षणभेदेन कार्यकारणभाव स्यात्तत्क्षणोत्पत्ती यावत्यो व्यक्तयस्तद्भेदात्क्षणभे कार्यकारणभावभेदः । मम तु तत्साधारणो ह्येक ए लाघवमिति दिक् ।

परे तु तत्तत्क्षणोत्पन्नदुःखाद्यपेक्षया तत्तत्क्षण न्यूनताभावेन तत्तद्व्यक्तित्वापेक्षया तत्तत्क्षणोत्पन्न कत्वे कारणतावच्छेदके गौरवात्तेन रूपेण न न कता । एवं नाश्यतापि न तत्तत्क्षणोत्पन्नसुखत्वेन, वात् । किं तु तत्तद्व्यक्तित्वेनेति । तत्कालोत्पन्नदुःख विशेषस्य बहुकालावस्थायित्वे बाधकाभाव इति । य यत्क्षणे दुःखादेरुत्पत्तिस्तत्पूर्वक्षणावृत्तिदुःखत्वादिना श्यतावच्छेदकत्वात् । न च तत्पूर्वक्षणानामपि नाना कार्यतावच्छेदके नानात्वं समानं गौरवमपरमधिकमि वाच्यम् समनियताभावानामेकत्वेन तत्क्षणवृत्ति भावतत्क्षणसमानकालीनक्षणवृत्तित्वाभावयोरेकत्वेन त्क्षणवृत्तित्वाभावस्य स्वरूपेण कार्यतावच्छेदकत्वे गौरवाभावात् । एवं कारणतापि यत्क्षणे दुःखादेरुत्प स्तत्क्षणावृत्तित्वेन लाघवात् । न च दुःखादेरुत्पत्तिवि यत्क्षणोत्पन्नदुःखादेरपि [illegible]

त्तिनाश्यतया कारणान्तराभावात् क्षणिकत्वासम्भ
त्। यत्क्षणे यानि दुःखादीनि उत्पद्यन्ते तेषां तत्पूर्व
णावृत्तिदुःखत्वादिना नाश्यता तदुत्पत्तिक्षणे यः तत्क्ष
वृत्तित्वेन नाशकतायाः सर्वत्र स्वीकारात्। न च स्वो
त्तिक्षणे नष्टस्यापि स्वक्षणावृत्तित्वेन स्वनाशकतया स्वक्ष
णिकत्वापत्तिरिति वाच्यम्। तदुत्तरक्षणवृत्तित्वस्यापि
शकतावच्छेदके निवेशात्।

वस्तुतस्तु नाशे प्रतियोगिनोऽपि कारणतया न तदु
त्पत्तिक्षणे तन्नाशः। द्वितीयक्षणे तु तन्नाशसम्भावना
नाशकस्याभावादिति तत्त्वम्। न च बुद्धिसुखदुःखेच्छ
यत्नधर्माधर्मद्वेषशब्दसाधारणी जातिरेकैव कल्प्यतां, तथ
तत्साधारण एक एव कार्यकारणभाव इति वाच्यम्
ानत्वादिना सङ्करप्रसङ्गात्। न च सुखदुःखसाधारण
का कल्प्यताम्। इष्टत्वादिति वदन्ति। तन्न। विनिगमन
विरहेण तत्तद्व्यक्तित्वेन नाशकताया दुर्वारत्वात्। एतच्च
वं गुणरहस्यटिप्पण्यां वेदितव्यम्।

वस्तुतस्तु तत्तत्क्षणवृत्तिनाशे तत्तत्क्षणावृत्तेर्नाश
त्वं ज्ञानेच्छासाधारण्येन वाच्यम्। न च तत्तत्क्षणावृत्ति
ादेः क्षणिकत्वापत्तिः। द्रव्यनाशादावसमवायिक
णनाशादेर्हेतुत्वेनातिप्रसङ्गविरहात्। अत एवेश्वरज्ञ
ादेस्तत्तत्क्षणावृत्तित्वेनैव वारणात् सर्वज्ञानेच्छा
साधारणवैजात्यकल्पनमपि निरस्तमिति दिक्।

इच्छात्वजातिमतीच्छा। सा चेच्छामीत्यनुगत
नसप्रत्यक्षसिद्धा।

सा च सुखे दुःखाभावे च सुखत्वदुःखाभावत्वप्र
कारिका सुखत्वदुःखाभावत्वप्रकारकज्ञानसाध्या[1] । तत्सा
धनेषु च सुखे दुःखाभावसाधनताज्ञानसाध्या । ननु दु
ःखसाधने पाकादाविच्छा न स्यात् तत्र सुखस्य दुःखाभाव
स्य वा साधनत्वस्याभावेन तज्ज्ञानासंभवादिति चेत् । न ।
रूपेण यत्रेच्छा तद्रूपाश्रयसाधनताज्ञानस्येच्छाहेतुत्वा
दिष्टसाधनताज्ञानस्य धर्मितावच्छेदकधर्मप्रकारकेच्छाज
नकत्वान्नान्यरूपेणेच्छा ।

कामोऽभिलाषो रागश्च संकल्पः करुणा तथा ।

वैराग्यं कपटं भावः स्पृहा तृष्णा तथैव च ॥

लोभादिकमुपायेच्छा भेदा एव तु विश्रुताः ।

तत्र मैथुनेच्छा कामः । अभ्यवहरणेच्छाऽभिला
षः । पौनःपुन्येन विषयसङ्गेच्छा रागः । अनासन्नक्रियाव
कर्त्तव्येच्छा संकल्पः । निरुपाधिकपरदुःखप्रहाणेच्छा क
रुणा । दोषदर्शनाद्विषयपरित्यागेच्छा वैराग्यम् । परवञ्चनेच्छा
कपटम् । अन्तर्निगूढेच्छा भावः । परद्रव्यादानेच्छा स्पृहा ।
अवश्यकर्तव्येऽपि स्वद्रव्यापरित्यागेच्छा कार्पण्यम् । अन्या
येन परद्रव्यादानेच्छा लोभः । इदं च स्वरूपकीर्त्तनं न
लक्षणम् । अतिव्यापकत्वादव्यापकत्वाच्च । लक्षणं च भक्ति
श्रद्धादेरिव जातिविशेषा विषयताविशेषास्तत्तत्क्रिया
दाद्युपाधिभेदाद्वा बोध्याः । एवं चिकीर्षासिसृक्षासं
हीर्षालक्षणमपीति दिक् ।

---

१ इच्छा द्विविधा । फले फलसाधने च । फलं द्विविधम् । सुखं दुःखा
भावश्च । तत्र फलेच्छां प्रति फलज्ञानं कारणम् । उपायेच्छां प्रति [illegible]

द्वेषत्वजातिमान् द्वेषः। सा चानुगतप्रत्यक्षसिद्धा।
त्मविशेषगुणः। अनित्य एव प्रयत्नहेतुः। अत्रो द्वेषा-
द्धे प्रवृत्तिरिति कश्चित्।

परे तु निवृत्तौ स हेतुरिति वदन्ति। स च दुःखे
त्वप्रकारकज्ञानसाध्यः। तत्साधनेषु दुःखसाधन-
ज्ञानसाध्यः। तत्साधनेष्वपि तत्साधनताज्ञानसाध्यः।
ता दुःखसाधनताज्ञानमेवोपायद्वेषहेतुः, दुःखपदेन द्वेष-
षयस्य ग्रहणात्। तथा च यत्र द्वेषस्तत्साधनताज्ञाने
त्वादन्यत्र द्वेषे कारणम्।

अन्ये तु दुःखप्रयोजकताज्ञानमुपायद्वेषे कारण
तुः। स च द्रोहक्रोधाक्षमामर्षेर्ष्यासूयामन्युभेदा
द्विविधः। तत्रात्यन्तविकारश्चिरानुबद्धापकारपर्यव
यी द्रोहः। शरीरेन्द्रियादिवैकृत्यहेतुरत्युत्पन्नदुःखप्र
वस्त्वाशुतरविनाशी क्रोधः। परकीयगुणाविषय
षोऽक्षमा। स्वगुणपरिभवशङ्किनः परगुणद्वेषोऽमर्षः
रमपकुर्वतीर्ष्या। अपकारासहिष्णोरसमर्थस्य पर
कारपर्यवसायी निगूढश्चिरकालावस्थायी द्वेषोऽसूया
पकर्तरि प्रत्यपकारासमर्थस्यान्तर्निगूढो द्वेषो मन्युरि
पादिस्वरूपकीर्तनमिति दिक्।

यत्नत्वजातिमान् यत्नः। स च जीवनयोनिरि
श्च। जीवनयोनिरनित्य एव। इतरश्च नित्योऽनित्यश्च
नित्यो भगवतः, जीवानामनित्यः प्रत्यक्षश्च। जीव
योनिस्त्वतीन्द्रियः।

—— तत्र किं मानम्? प्राणक्रियाया अदृष्टा देवे

त्वेन ध्वंसस्यैवादृष्टत्वावच्छिन्ने प्रतिबन्धकत्वस्वी-
ण तथा हेतुत्वस्यावश्यकत्वम् । किं च मिथ्याज्ञानत्वेन
णत्वे सुप्ते मिथ्याज्ञानाभावाददृष्टोत्पत्तिर्न स्यात् ।
मिथ्याज्ञानशब्देन वासनाशब्दवाच्यभावनाख्यसं-
रो वाच्यः । तथा च सुप्ते तस्य विद्यमानत्वाददृष्टो-
त्पत्तिरिति वाच्यम् । संस्कारस्य प्रागेव दूषितत्वात् ।
तत्त्वज्ञानध्वंसस्यैव प्रतिबन्धकत्वमिति दिक् ।

तल्लक्षणं तु सुखजनकवृत्त्यतीन्द्रियविशेषगुणमात्र-
जातिमत्त्वमिति कश्चित् । विलक्षणात्ममनःसंयो-
रणाय विशेषेति । ननु तस्यातीन्द्रियत्वे तत्र किं
म् ।

अत्र केचित् यागादेः स्वर्गसाधनत्वस्य वेदेन बोध-
साधनत्वस्य कार्याव्यवहितपूर्वक्षणे स्वस्वव्यापारा-
रसत्त्वरूपस्य व्यापाराभावे बाधाद्वेदाप्रामाण्यनिरा-
व्यापारत्वेनादृष्टकल्पनम् । न च देवताप्रीतिरेव
पारोऽस्तु तस्या यागजन्यत्वस्य क्लृप्तत्वात् स्वर्गजन-
मात्रं कल्प्यते । 'यजदेवपूजायामि'ति स्मृतेः पूजा च
वताप्रीतिहेतुभूता क्रियेति वाच्यम् । प्रीतेरप्या
विनाशित्वात्, प्रीतिपरम्पराकल्पने गौरवापत्तेश्च ।
स्नानादौ देवताप्रीतेरभावाच्च । विष्ण्वादिदेवता
भावाच्च । न च विष्णुप्रीतेः फलत्वेन अन्यापि विष्णु-
प्रीतिरस्तीति वाच्यम् । तत्र कर्मधारयेण व्यापिकाधा-
ासीनायाः प्रीतेरेव फलत्वेनाश्रवणात् । न च यागध्वंस
व्यापारोऽस्त्विति वाच्यम् । यद्ध्वंसजन्यं तत्तद्जन्य-
... यागजन्यतापत्तेः । यागस्य कारणीः

न्तरत्वेन फलानन्त्यापत्तेश्च । न च विधिबोध्यवर्षादि
पर्यन्तमेव फलं ध्वंसो जनयतीति वाच्यम् । स्वर्गका
यजेतेत्यादौ विधिना तादृशफलाबोधनात्तत्र फलानन्त्य
पत्तेः । एतत्तत्त्वमन्यत्राभिहितमेवेति दिक् ।

अधर्मत्वजातिमानधर्मः । दुःखकारणविशेषगुणवृत्ति
सविषयावृत्तिजातिमान्वा । स चानित्य एव । दुःखा
चित् प्रायश्चित्तादिना च नश्यति । स चातीन्द्रिय आत्म
विशेषगुणः । धर्मवदेतत्साधकं द्रष्टव्यम् । विस्तरस्तु गुणर
त्नटिप्पण्यां वेदितव्य इति दिक् ।

बुद्धित्वजातिमती बुद्धिः । घटं जानामि घटं जानाम
ीत्यनुगतप्रत्यक्षस्य तत्र मानत्वात् । सा च द्विविधा । स्मृ
तिरनुभवश्च । स्मृतिः समानप्रकारकज्ञानजन्याऽनित्या
यथार्थाऽयथार्था च । अनुभवो द्विविधः । नित्योऽनित्य
श्च । ईश्वरस्य नित्यः । स च यथार्थ एव तत्तद्रूपेण सर्ववि
षयकश्च । जीवानां त्वनित्यः । स च सर्वविषयकोऽसर्ववि
षयकश्च । प्रमेयत्वादिसामान्यलक्षणाजन्यः सर्वविषयक
स्तदन्यस्त्वसर्वविषयकः । स चानुभवः प्रमाऽप्रमाभेदाद् द्वि
विधः । तत्र प्रमा चतुर्विधा । प्रत्यक्षानुमित्युपमितिशाब्द
भेदात् । तत्करणं प्रमाणमपि चतुर्विधम् । प्रत्यक्षानुमा
नोपमानशाब्दभेदात् । तत्र प्रत्यक्षं द्विविधम् निर्विकल्प
कसविकल्पकभेदात् । तत्र सविकल्पकं द्विविधं
प्रमाऽप्रमाभेदात् । तद्वति तत्प्रकारकानुभवस्तत्प्रमा त
त्संबन्धेन तद्विशेष्यकत्वावच्छिन्ना तेन सम्बन्धेन त
त्प्रकारता तन्निरूपितानुभवस्तेन तेन सम्बन्धेन तत्तत्प्रमा ।
संयोगेन वह्निमति समवायेन वह्निज्ञानं न प्रमा । न

ृको धर्मोऽस्तु । तथा चेश्वरप्रमाया अनुमितावेवान्त-
र्गोऽस्तु इति वाच्यम् । अनुमितित्वजातेस्तत्साधार-
ण्यकारेणानुमितावन्तर्भावस्य तथाप्यपरिहारात् ।
ारान्तरेणानुमितावन्तर्भावे बाधकान्तरमिति चेन्म-
पे समानमिति दिक् ।

साक्षात्कारिप्रमाकरणं प्रत्यक्षं घ्राणरसनचक्षुःश्रोत्र-
मनोभेदात् षड्विधम् । नन्वालोकस्यापि साक्षात्का-
प्रमाकरणत्वेन प्रत्यक्षप्रमाणत्वापत्तिरिति चेत् ? न ।
क्षात्कारत्वव्याप्यजात्यवच्छिन्नकार्यताप्रतियोगिकका-
तारूपकरणत्वेन प्रत्यक्षप्रमितिकरणविभागादालोका-
गादृशकरणत्वाभावात्तेन विनाऽप्यन्धकारादेश्चाक्षुषस्य
पमानत्वाच्चक्षुरादेश्च चाक्षुषत्वावच्छिन्नं प्रत्येव हेतु-
ालोकस्य तथात्वमिति केचित् ।

परे तु आलोकादेः प्रमाणत्वेऽपि प्रत्यक्षप्रमाणेऽन्त-
वान्न प्रमाणविभागव्याघातः । प्रत्यक्षप्रमाणस्य षड्वि-
वकथनं नाधिकसंख्याव्यवच्छेदपरम् । अत एव इ
दिन्द्रियार्थसन्निकर्ष इत्यादिनाऽन्येषामपि प्रमाणत्वक-
नम् । अत एव द्रव्यचाक्षुषं प्रति संयोगेन, द्रव्यसमवेत
क्षुषं प्रति संयुक्तसमवायेन, द्रव्यसमवेतसमवेतचाक्षुष
ावच्छिन्नं प्रति संयुक्तसमवेतसमवायादिना चक्षुषे
ेतुतायाः आवश्यकत्वेन चक्षुष्ट्वेन हेतुत्वे मानाभावेऽपि
क्षतिः । सामान्यकार्यकारणभावस्यापि युक्तिसिद्धस्यो
ीकारादित्याहुः । करणत्वं च व्यापारवत्कारणत्वम्
व्यवधानेन कार्योत्पादकत्वं वा । आद्ये चक्षुरादीनाम

धातापत्तिभयेन साक्षात्कारत्वस्य तत्साधारण्यस्य प्र
विभाजकधर्मस्य स्वीकारः । न च तत्साधारणान्यतर
नैव विभागोऽस्तु । अनुमितितत्साधारण्यान्यतरत्वे
पि अनुमितिविभागोपपत्तावीश्वरप्रमायाः प्रत्यक्षेऽनुमि
त्याऽन्तर्भावे विनिगमकाभावात्तत्र तत्स्वीकारादित्या

अपरे तु न कार्यतावच्छेदकतयापि प्रत्यक्षत्वजा
सिद्धिः द्रव्यत्वविशिष्टलौकिकविषयतासंबन्धेन ज्ञाने च
त्वस्य हेतुत्वात् । न च तादृशविषयतया ईश्वरज्ञानस्य
वैद्रव्ये सत्त्वाद् व्यभिचार इति वाच्यम् । लौकिकविषयत
प्रत्यक्षस्य प्रवृत्तौ हेतुत्वेनेश्वरज्ञाने लौकिकविषयताया अ
नभावात् । तत्र तत्स्वीकारे त्वस्तु कार्यतावच्छेदकतया
प्रत्यक्षत्वसिद्धिः । न चेश्वरप्रत्यक्षे मानाभावाद्व्यभिचारा
सेश्वान च रजतं पश्यामीति प्रत्ययाद् भ्रमेऽपि लौकिकविष
तासत्त्वाद् व्यभिचार इति वाच्यम् । विद्यमानरजतस्यैव प्र
मानाङ्गीकारान्महत्त्वस्य तत्र सत्त्वात् । अनुव्यवसाय
प्रमात्वनियमानङ्गीकारेण भ्रमे लौकिकविषयताया अनङ्गी
काराच्च । अत एव लौकिकविषयतया द्रव्यचाक्षुषे चक्षुः
संयोगस्य कारणत्वेऽपि न व्यभिचारः । न चेश्वरज्ञाने प्रत्य
क्षत्वानङ्गीकारे ईश्वरप्रमाया आधिक्येन प्रमाविभागव्या
घात इति वाच्यम् । ईश्वरज्ञाने लौकिकविषयतास्वीका
पक्षे तथैव प्रत्यक्षप्रमाविभागसम्भवात् । तस्य ईश्वरप्रम
यामनङ्गीकारेऽपि न विभागानुरोधेन तत्प्रत्यक्षत्वसिद्धि
सिद्धधर्मेण विभागो न तु तदनुरोधेनापि पदार्थसिद्धिः
अतिप्रसङ्गात् । न वा प्रमाविभागव्याघातः । सिद्धधर्मेणान्य
तरत्वादिनैव [illegible]

ो धर्मोऽस्तु । तथा चेश्वरप्रमाया अनुमितावेवान्त-ऽस्तु इति वाच्यम् । अनुमितित्वजातेस्तत्साधार-कारेणानुमितावन्तर्भावस्य तथाप्यपरिहारात् । न्तरेणानुमितावन्तर्भावे बाधकान्तरमिति चेन्म-समानमिति दिक् ।

साक्षात्कारिप्रमाकरणं प्रत्यक्षं घ्राणरसनचक्षुःश्रोत्र-नोभेदात् षड्विधम् । नन्वालोकस्यापि साक्षात्का-माकरणत्वेन प्रत्यक्षप्रमाणत्वापत्तिरिति चेत् ? न । त्कारत्वव्याप्यजात्यवच्छिन्नकार्यताप्रतियोगिकका-रूपकरणत्वेन प्रत्यक्षप्रमितिकरणविभागादालोका-शकरणत्वाभावात्तेन विनाऽप्यन्धकारादेश्चाक्षुषस्य नित्वाच्चक्षुरादेश्च चाक्षुषत्वावच्छिन्नं प्रत्येव हेतु-लोकस्य तथात्वमिति केचित् ।

रे तु आलोकादेः प्रमाणत्वेऽपि प्रत्यक्षप्रमाणे ऽन्त-प्रमाणविभागव्याघातः । प्रत्यक्षप्रमाणस्य षड्वि-नं नाधिकसंख्याव्यवच्छेदपरम् । अत एव क न्द्रियार्थसन्निकर्ष इत्यादिनाऽन्येषामपि प्रमाणत्वक-अत एव द्रव्यचाक्षुषं प्रति संयोगेन, द्रव्यसमवेत-प्रति संयुक्तसमवायेन, द्रव्यसमवेतसमवेतचाक्षुष-च्छिन्नं प्रति संयुक्तसमवेतसमवायादिना चक्षुषो ा आवश्यकत्वेन चक्षुष्ट्वेन हेतुत्वे मानाभावेऽपि ः । सामान्यकार्यकारणभावस्यापि युक्तिसिद्धस्यैव ादित्याहुः । करणत्वं च व्यापारवत् कारणत्वम् ।
ानेन कार्योत्पादकत्वं वा । आद्ये चक्षुरादीनाम-

परे तु व्यापारवदसाधारणं कारणं करणम् । घ
कपालद्वयसंयोगवारणाय व्यापारवदिति । ईश्वरज्ञ
रणादावसाधारणेति । तत्राय यद्धर्मावच्छिन्नं यद्धर्मावच्छि
न्नयित्वैव यद्धर्मावच्छिन्नं जनयति तद्धर्मावच्छिन्नस्य
र्मावच्छिन्नं तद्धर्मावच्छिन्ने जननीये व्यापारः । न
ज्ञानस्य कार्यतावच्छेदकावच्छिन्ने जनयितव्ये किंचि
दवच्छिन्नं व्यापारोऽस्तीति । ननु चक्षुषा संयोगेन द्र
परमाण्वाकाशादीनामपि ग्रहणं स्यात्तत्रापि तत्सं
सत्त्वात् । न च चक्षुःसंयोगस्यातीन्द्रियत्वेन फलैकोन्ने
तत्र फलाभावेन तत्सत्त्वे मानाभाव इति वाच्यम् । पर
महत्त्वाभावस्याकाशे उद्भूतरूपाभावस्य च चाक्षु
मज्ञनिकाय। इन्द्रियसंयुक्तविशेषणतायाः सत्त्वेन तत्र
संयोगस्यावश्यकत्वात् । न च द्रव्यत्वविशिष्टलौ। वि
क्षुषे महत्त्वस्योद्भूतरूपस्य च समवायेन हेतुत्वान्न दो
वाच्यम् । एवमप्यन्धकारे भूतलादेश्चाक्षुषापत्तेः
समवायेन महत्त्वोद्भूतरूपयोः सत्त्वात् । अन्धकारे चा
न्यथानुपपत्त्या चक्षुःसंयुक्तविशेषणतायास्तत्र सत्त्वे
चक्षुःसंयोगस्यापि सत्त्वात् । न च द्रव्यचाक्षुषे संयोगे
नोद्भूतरूपवदालोकस्य महत्त्ववद्रूपवदालोकस्य रूपव
कस्य विलक्षणसंयोगेनालोकस्य वा हेतुत्वमत एव न
दिसंयोगेन घटादिचाक्षुषमिति नोक्तदोष इति वाच्
एवमपि घटे किंचिदवयवावच्छेदेनालोकसंयोगेऽन्य
वेन चक्षुःसंयोगे चाक्षुषापत्तेः । आलोकसंयोगावच्छे
दवयवावच्छेदेन चक्षुःसंयोगवतां घटचाक्षुषस्य जात
त्वेन विजातीयसंयोगेनालोकस्य तत्र सत्त्वादिति दि

योगस्य समवायेन द्रव्यचाक्षुषे हेतुत्वान्नोक्त-

तु आलोकसंयोगावच्छेदकावच्छिन्नचक्षुःसंयोगस्य योगावच्छेदकावच्छिन्नालोकसंयोगस्य वा हेतुत्व- विनिगमकाभावान्न तथा हेतुत्वम्। अत एवालोक- वच्छिन्नचक्षुःसंयोगोऽपि न हेतुः। नापि तत्तदवय- च्छिन्नस्यालोकसंयोगस्य चक्षुःसंयोगस्य च हेतुत्वम्। वन्यावयवावच्छेदेनालोकसंयोगस्य चक्षुःसंयोगस्य प्रत्यक्षस्य जायमानत्वेन व्यभिचारात्। नाप्या- योगावच्छेदकावच्छिन्नसंयोगसम्बन्धेन चक्षुर्हेतुः। योगावच्छेदकावच्छिन्नसंयोगेनालोकेन वेत्यत्र मनाविरहात्। अत एव एतदीयद्रव्यचाक्षुषे एत- क्षुःसंयोगस्य कारणत्वं वाच्यं, तथा चातिप्रसङ्ग- र्थमालोकसंयोगावच्छेदकावच्छिन्नैतच्चक्षुःसंयोग- ारणत्वं कल्प्यत इति निरस्तम्। एतद्द्रव्य- एतच्चक्षुःसंयोगावच्छेदकावच्छिन्नसंयोगेनालो- रणत्वस्यापि वस्तुस्थितत्वादिति तेन तेन रूपेण संबन्धेन वा द्वयोरेव हेतुत्वमाहुः।

अन्ये तु अन्यावयवावच्छेदेन घटादावालोकसंयो- ऽपि चक्षुःसंयोगोऽस्त्येव। न च तत्र मानाभाव अ- दिप्रत्यक्षान्यथानुपपत्त्या तत्र तत्स्वीकारावश्य- । तथा च द्रव्यचाक्षुषे विजातीयसंयोगेन चक्षुषो नातिप्रसङ्गः। न चैवमन्धकारे चक्षुःसंयोगावच्छेद- ावच्छेदेनालोकसंयोगे संपादितेऽपि तच्चाक्षुषं न ते वाच्यम्। तदानीमन्यस्यैव चक्षुःसंयोगस्याङ्गीका-

अन्ये तु महदनभिभूतोद्भूतरूपवदालोकसंयोग
हेतुत्वमन्धकारे सुवर्णसंयोगात् सुवर्णस्य घटादेश्च
त्यक्षमिति । तन्न । बलात्सजातीयग्रहणकृतस्याभा
स्याभिभवत्वेनान्धकारे तादृशाभिभवस्य सुवर्णरूपाद
भावेन सुवर्णादेः प्रत्यक्षापत्तेरपरिहारात्। बलवत्सजा
यसम्बन्धस्याभिभवत्वे तु कारणतावच्छेदकगौरवापा
रिति दिक्।

चक्षुःसंयुक्तसमवायेन द्रव्यसमवेतचाक्षुषम् । चः
संयुक्तसमवेतसमवायेन द्रव्यसमवेतसमवेतचाक्षुषम्

ननु द्रव्यसमवेतचाक्षुषे चक्षुःसंयुक्तसमवायस्य
त्वे परमाणुघटितचक्षुःसंयुक्तसमवायेनान्धकारे पृथिवी
चाक्षुषवारणायालोकसंयोगावच्छेदेन चक्षुःसंयुक्तमहदु
तरूपवत्समवायस्य हेतुत्वं वाच्यं तथा च त्रसरेणुचाक्षुषे
भिचारः । तस्य द्रव्यसमवेतचाक्षुषत्वेनालोकसंयोगाव
देन चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायजन्यत्वाभावा
न च द्रव्यान्यद्रव्यसमवेतचाक्षुषे तस्य हेतुत्वान्नोक्त
इति वाच्यम्। घटादावपि तादृशसन्निकर्षसत्त्वेन द्रव्या
द्रव्यसमवेतचाक्षुषापत्तेः । न च द्रव्यान्यद्रव्यसमवे
रूपादेर्घटादौ चाक्षुषं जायत इति वाच्यम् । द्रव्यान्यद्र
समवेतस्य रूपादेस्त्रसरेणौ चाक्षुषसत्त्वेन व्यभिचारत
वस्थ्यात् । द्रव्यान्यद्रव्यसमवेतत्वविशिष्टलौकिकवि
तासम्बन्धेन चाक्षुषे तस्य हेतुत्वं तर्हि तादृशविषयत
घटादौ चाक्षुषापत्तेर्दुर्वारत्वादिति चेत् ।

अत्र केचित् तादृशचाक्षुषे द्रव्यस्य तादात्म्येन
तिबन्धकत्वान्नोक्तदोष इति वदन्ति ।

समवेतचाक्षुषत्वाभावान्नोक्तव्यभिचार इति । द्रव्य-
वेतत्वविशिष्टलौकिकविषयतासम्बन्धे चाक्षुषे आ-
संयुक्तचक्षुःसंयुक्तरूपवत्समवायो हेतुः द्रव्यसमवेत-
विशिष्टलौकिकविषयतया चाक्षुषे वा स हेतुः । अत
द्रव्यसमवेतरूपादिचाक्षुषस्य रूपत्वादौ सत्त्वेन तत्र
संयुक्तरूपवत्समवायसन्निकर्षाभावेऽपि न क्षतिः ।
द्रव्यत्वादिविशिष्टलौकिकविषयतया चाक्षुषे चक्षुः-
गादेर्हेतुत्वमित्याहुः ।

अपरे तु त्र्यणुकनित्यत्वाङ्गीकारे द्रव्यसमवेतचाक्षुषे
षयसमवेतत्वसम्बन्धेनाद्यचाक्षुषस्य द्रव्यचाक्षुषस्य
तुत्वं, न तु तादृशचक्षुःसंयुक्तसमवायस्यापि, घटादि-
षानन्तरमेव तद्रूपादिचाक्षुषाङ्गीकाराच्च व्यभिचार
हुः । तन्न । घटचाक्षुषे व्यभिचारात्पूर्वं कपालचाक्षुषा-
त् । अन्यथा त्र्यणुकादिक्रमेण घटचाक्षुषापत्तेः ।

वस्तुतो द्रव्यत्वविशिष्टलौकिकविषयताख्यस्वसम-
वसम्बन्धेन चाक्षुषस्य द्रव्यान्यद्रव्यसमवेतत्वविशि-
किकविषयतासम्बन्धेन चाक्षुषे हेतुत्वं तादात्म्यसम्ब-
द्रव्यस्य च प्रतिबन्धकत्वं त्रसरेणोरनित्यत्वपक्षेऽपि
वति । अत एव द्रव्यचाक्षुषस्य स्वविषयगुणसमवेत-
म्बन्धेन रूपत्वादौ सत्त्वेऽपि क्षतिविरह इति ध्येयम् ।

ननु चक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेत-
तचाक्षुषे हेतुत्वे परमाणुघटिततादृशसन्निकर्षात्परमा-
गतशुक्लत्वचाक्षुषापत्तिस्तद्वारणार्थं चक्षुःसंयुक्तमा-
संयुक्तं यन्महदुद्भूतरूपवत् तत्समवेतसमवायो हेतु-
यः । तथा च त्रसरेणुचाक्षुषे तद्रूपादिचाक्षुषे च व्य-

तुत्वं वाच्यं न तु द्रव्यान्यदिति द्रव्यसमवेतविशेषणक
त्रसरेणुरूपचाक्षुषे व्यभिचारापरिहारात् । तथा च घटा
मद्रूपादौ च तादृशचाक्षुषापत्तिरतस्तादृशचाक्षुषे द्रव
समवेतस्य प्रतिबन्धकत्वं वाच्यम्, तथा च सत्तायां त
शचाक्षुषं न स्यात् । तस्या द्रव्यसमवेतत्वादिति चेत्

अत्र केचित् । द्रव्यमात्रसमवेतस्य तत्र प्रतिबन्
कत्वान्नोक्तदोष इत्याहुः ।

अन्ये तु द्रव्यसमवेतमात्रसमवेतचाक्षुषे द्रव्यसम
वेतस्य प्रतिबन्धकत्वमाहुः । तन्न । त्रसरेणुरूपादौ ताद
ृचाक्षुषसत्त्वेन तत्र द्रव्यसमवेतस्य प्रतिबन्धकत्वासिद्धे
द्रव्यान्यद्रव्यसमवेतं तन्मात्रसमवेतचाक्षुषे तादृशस
र्षस्य हेतुत्वे द्रव्यसमवेतस्य प्रतिबन्धकत्वान्नोक्तदोषः

परे तु चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवेतसमवायस
हत्त्ववत्समवेतसमवेतचाक्षुषे हेतुत्वान्न दोष इत्याहुः

नव्यास्तु त्रसरेणोर्नित्यत्वाङ्गीकारेण द्रव्यसमवेतसम
तचाक्षुषे चक्षुःसंयुक्तरूपवत्समवेतसमवायस्य हेतुत्वा
न्नोक्तदोष इत्याहुः

वस्तुतो द्रव्यसमवेतसमवेतचाक्षुषत्वं न कार्यता
च्छेदकं लाघवेन समवेतसमवेतचाक्षुषत्वस्यैव कार्यताव
च्छेदकत्वात् । एवं वचोऽपि त्वाचग्रहे हेतुत्वं रूपस्थाने
स्पर्शप्रवेशेन द्रष्टव्यम् ।

अत्र प्राचीननैयायिकाः । त्वाचद्रव्यग्रहे समवाये
नोद्भूतस्पर्शमात्रं न प्रयोजकमपि तु रूपमपि । आत्मान्यद्र
व्यप्रत्यक्षे मानसान्यद्रव्यप्रत्यक्षे वा समवायेनोद्भूतरू
पस्य हेतुत्वात् । अन्यथा तादृशप्रत्यक्षे ऽन्धकारे ...

यम् । तस्य द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति कारणत्वेन
शप्रत्यक्षं प्रत्यपि कारणत्वे गौरवापत्तेः । तेन च रूप-
पे द्रव्यचाक्षुषे कारणत्वेन तादृशप्रत्यक्षेऽपि कार-
गौरवमिति वाच्यम् । द्रव्यचाक्षुषे चक्षुःसंयोगस्या-
यद्रव्यप्रत्यक्षे रूपस्य हेतुत्वेनैवानतिप्रसङ्गात् । न च
चाक्षुषे उद्भूतरूपं मानसान्यद्रव्यप्रत्यक्षे उद्भूतस्पर्शो
हेतुरस्तु न तु द्रव्यस्पर्शने उद्भूतस्पर्शो मानसान्यद्र-
व्यक्षे उद्भूतरूपमिति वाच्यम् । आलोकादेरप्रत्यक्ष-
त्तेः । न च त्वन्मते वायोरप्रत्यक्षत्ववन्मन्मते आलो-
प्रत्यक्षत्वमिष्टमेवेति वाच्यम् । आलोकादेरप्रत्यक्षत्वे
न पक्षिकाण्डादौ दूरत्वादिदोषेण क्रियाया अप्रत्य-
पूर्वदेशविभागोत्तरदेशसंयोगेन क्रियानुमानानुप-
। तद्देशस्यालोकस्योद्भूतस्पर्शाभावेन त्वचातेऽप्रत्य-
त्तद्विभागस्य तत्संयोगस्य चाप्रत्यक्षत्वेन पूर्वदेश-
गोत्तरदेशसंयोगरूपलिङ्गस्याज्ञानेनानुमानासम्भवा-
किं च वायोः प्रत्यक्षत्वे तद्गतसंख्यादेः प्रत्यक्षापत्तिः ।
वायोरप्रत्यक्षत्वे शीतस्पर्शवान् वायुरिति त्वाच-
नुपपत्तिः, बहिरिन्द्रियाणां स्वायोग्यमुख्यविशेष्यक-
जनकत्वादिति वाच्यम् । तादृशसिद्धान्ताङ्गीकारे
शीतस्पर्शो वायुवृत्तिरिति त्वाचज्ञानानन्तरं मनसैव
स्पर्शवान् वायुरिति ज्ञानाङ्गीकारादित्याहुः । तन्न ।
वायुरिति त्वाचप्रत्यक्षानुरोधेन तादृशप्रत्यक्षे मह-
स हेतुत्वात् । किं चाऽस्मान्यद्रव्यप्रत्यक्षत्वस्य जाति-
त्वेन तादृशप्रत्यक्षस्यार्थसमाजग्रस्तत्वेन च तद्व-
प्रत्यक्षजनकता [illegible]

वयप्रत्यक्षत्वापेक्षया लाघवेन च द्रव्यचाक्षुषे उद्भूत
पस्य द्रव्यस्पार्शने उद्भूतस्पर्शस्य हेतुत्वाद्वायुः स्पार्शन
द्भूतसंख्याप्रत्यक्षं फूत्कारादौ त्विष्टमेवेति नव्याः ।

घ्राणस्य संयुक्तसमवायेन । गन्धस्य प्रत्यक्षे घ्राण
हेतुत्वम् । गन्धगतजातिप्रत्यक्षे गन्धसमवेतप्रत्यक्षे
संयुक्तसमवेतसमवायेन, गन्धप्रत्यक्षे महत्त्वं तु स्वाश्र
समवेतत्वेन महत्त्वघटितसन्निकर्षो वा हेतुः । गन्धत
दिप्रत्यक्षे तु महत्त्वादिघटितसन्निकर्ष एव हेतुर्न तु
त्वं स्वाश्रयसमवेतसमवेतत्वसम्बन्धेन हेतुः । परमाणु
टितसन्निकर्षेण गन्धत्वप्रत्यक्षापत्तेः

एवं रासनेऽपि बोध्यमिति दिक् ।

गन्धत्वविशिष्टलौकिकविषयतया प्रत्यक्षं प्र
वा घ्राणजं प्रति वा घ्राणसंयुक्तमहत्त्ववन्निरूपितसम
यो हेतुः । न च रूपादौ तादृशप्रत्यक्षापत्तिः । ते
घ्राणायोग्यत्वात् । तादात्म्येन गन्धस्य कारणत्वाद्व
तादृशसंयुक्तसमवेतसमवायेन घ्राणस्य गन्धगतजाति
विशिष्टलौकिकविषयतया घ्राणजप्रत्यक्षे गन्धसमवेत
विशिष्टलौकिकविषयतया प्रत्यक्षे गन्धसमवेतस्य ता
त्म्येन समवेतत्वसंबन्धेन गन्धस्य वा हेतुत्वेन न स
त्वादौ तादृशप्रत्यक्षम् । एवमेव रसनया रसस्य तत
मवेतानां च ग्रहो बोध्यः । तथा हि रसत्वविशि
लौकिकविषयतया रासने रसनासंयुक्तमहत्त्ववन्निरूपि
समवायेन रसनायास्तादात्म्यसंबन्धेन रससमवेतस्य र
समवेतत्वसंबन्धेन रसस्य वा हेतुत्वान्नरूपादौ स
त्वादौ च तादृशप्रत्यक्षम् । न वा गन्धघटितरसनासन्नि

ासमवायेन तत्समवेतग्रहः ।

ननु श्रोत्रेण समवायेन शब्दग्रहे देशान्तरस्थशब्दग्रह
ापत्तिरिति चेत्? न । शब्दत्वविशिष्टलौकिकविषयतया
त्पुरुषीयप्रत्यक्षे श्रावणे वा तत्कर्णावच्छिन्नशब्दस्य हेत्
वात् ।

अन्ये तु तत्तत्पुरुषीयकर्णावच्छिन्नसमवायस्य तत्पुरु
ीयशब्दप्रत्यक्षे हेतुत्वान्नोक्तदोष इत्याहुः ।

शब्दप्रत्यक्षे तद्गतजातिप्रत्यक्षे च श्रोत्रमनःसंयो
एव व्यापारः । शब्द एवेत्यन्ये ।

मनसा संयोगेनात्मग्रहः । तत्समवेतानां संयुक्तस
वायेन तत्समवेतसमवेतानां संयुक्तसमवेतसमवायेन
संस्कारादीनां तत्समवेतानां च मनसा न प्रत्यक्षम् । ते
ानसायोग्यत्वादिति केचित् ।

अपरे तु गुणत्वविशिष्टलौकिकविषयतया प्रत्यक्ष
ाति मानसं प्रति वा योग्यगुणत्वेन कारणत्वात्, गुणस
वेतत्वविशिष्टलौकिकविषयतया प्रत्यक्षे मानसे व
ोग्यगुणसमवेतस्य तादात्म्येन समवेतत्वसंबन्धेन योग्य
ुणस्य वा हेतुत्वान्नोक्तदोषः । योग्यगुणत्वं तु ज्ञानत्वा
दिव्यापकसंस्कारादिव्यावृत्तो जातिविशेषः । न चैवं सवि
निर्विकल्पकस्य प्रत्यक्षापत्तिः । तस्य निर्विकल्पकव्यावृ
त्वे तु ज्ञानत्वेन सङ्करापत्तिरिति वाच्यम् । घटमहं जाना
ीति प्रत्यक्षे निर्विकल्पकस्यापि विषयत्वे बाधकाभावात्
स्यातीन्द्रियत्वोक्तिस्तु एतादृशप्रत्यक्षस्य सविकल्पकवि
ायत्वेनाप्युपपत्तेर्न तस्य तत्साधकत्वम् । किं त्वनुमानस्
ेत्यभिप्रायेणेति केचित् ।

नानङ्गीकारात् ज्ञानत्वकृतित्वादिव्यापकत्वमेव त
स्याहुः ।

अन्ये तु जीवनयोनियत्नानङ्गीकारान्निर्विकल्पकत
तादृशप्रत्यक्षे प्रतिबन्धकत्वान्नोक्तदोष इत्याहुः ।

ननु घटमहं जानामीति प्रत्यक्षस्य सविकल्पकवि
यत्वेनाप्युपपत्तेर्न निर्विकल्पके मानमिति चेत्? न । वि
क्षणघटत्वप्रकारकबुद्धेर्जनकं विलक्षणघटत्वज्ञानं वाच्य
अन्यथा जातिमानिति ज्ञानोत्तरं घट इति ज्ञानापत्तेः
च घटत्वे जातित्वाप्रकारकघटत्वप्रकारतयैव तस्य वैल
ण्याद्विलक्षणघटत्वप्रकारतायां न मानमिति वाच्यम
घटो जातिमानित्यत्र वैलक्षण्याभावापत्तेः । तथा च घ
यमिति बुद्धेः पूर्वं घटत्वज्ञानं सिद्ध्यन्निर्विकल्पकमेव सिध
तीत्यन्यत्र विस्तरः ।

इन्द्रियेणाभावप्रत्यक्षे तु क्वचिदिन्द्रियविशेषणत
यथा श्रोत्रेणाकाशे गकाराद्यभावग्रहः । ककारादौ गत्वा
भावग्रहस्तु इन्द्रियसमवेतविशेषणतया, कत्वादौ गत्वा
भावग्रहणं इन्द्रियसमवेतविशेषणतया, चक्षुरादिना द्र
ऽभावग्रहणं संयुक्तविशेषणतया, द्रव्यसमवेतेऽभावग्रह
णं तु संयुक्तसमवेतविशेषणतया, द्रव्यसमवेतसमवेतेऽभ
वप्रत्यक्षं तु संयुक्तसमवेतसमवेतविशेषणतया, द्रव्यवृत्ति
घटाभावे द्रव्यत्वभावत्वाद्यभावग्रहे तु इन्द्रियसंयुक्त
विशेषणविशेषणता । एवमनुभवानुसारेणान्यत्रापि द्र
ष्टव्यमिति दिक् ।

न च विशेषणताया बहुविधत्वेन षड्विधत्वं सन्नि
र्षस्येति सिद्धान्तव्याघात इति वाच्यम । विशेषणता...

युक्तसमवायसंयुक्तसमवेतसमवायानां समवायत्वेन मेवाथ, समवेतसमवाययोः यद्वा संयोगत्वेन संयोगा-समवायत्वेन चतुर्णां विशेषणतात्वेन विशेषणतानामे-त्वे त्रैविध्यमेव कुतो नोक्तमिति वाच्यम् । विभागे तत्रेच्छाया नियामकत्वादिति दिक् ।

इति प्रत्यक्षपरिच्छेदः समाप्तः ॥



# अथानुमानं निरूप्यते ।

अनुमितिकरणमनुमानम् । अनुमितित्वं चानुमिमीत्यनुभवसिद्धो जातिविशेषः ।

परे तु वह्निमनुमिनोमीति प्रतीतिवत्पर्वतमनुमिनोमीति प्रतीत्यभावेन विधेयताया एव तादृशप्रतीतिविषयत्वे सति अनुमितित्वजातौ मानाभावमाहुः ।

तच्चानुमानं ज्ञायमानं लिङ्गमिति प्राञ्चः । अतीतानागतस्यापि लिङ्गस्य ज्ञानादनुमित्युत्पत्तेस्तज्ज्ञानं परामर्शव्यापारकं करणमिति नव्याः ।

मनोजन्यत्वेन मानसत्वस्यान्यत्र निरस्तत्वात्तत्र करणमिति नव्यतराः ।

परामर्शस्तु येन रूपेण व्याप्तिज्ञानं तेन रूपेण पक्षधर्मताज्ञानं तच्चैकं ज्ञानद्वयं वा । एवं च धूमो वह्निव्याप्यो धूमवान् पर्वत इति ज्ञानं स्वाव्यवहितोत्तरं पर्वतो वह्निमानित्यनुमितौ हेतुरिति मीमांसकाः । तन्न । स्वस्वाव्यवहितोत्तरपर्वतो वह्निमानित्यनुमितौ धूमत्वेन व्याप्तिज्ञानस्य तेन रूपेण पक्षधर्मताज्ञानस्य च हेतुत्वे गौरवात् । अतः पर्वतो वह्निव्याप्यधूमवानिति ज्ञानस्यैव स्वाव्यवहितोत्तरपर्वतो वह्निमान् इत्यनुमितौ लाघवेन हेतुत्वं गृह्यमाणव्याप्यतावच्छेदकीभूतधर्मप्रकारकपक्षधर्मताज्ञानस्यैकस्यैव स्वाव्यवहिततादृशानुमितौ हेतुत्वे तु पक्ष

। कस्य चित् व्याप्तिग्रहात् द्रव्यवान् पर्वत इति ज्ञानात् मित्यापत्तिवारणाय तत्कालीनत्वेन तत्पुरुषीयत्वेन सिग्रहविशेषणत्वे तु अनन्तकार्यकारणभावप्रसङ्गाच्चे- हुः ।

अपरे तु पर्वतो वह्निमानित्यनुमितिजनकतावच्छेद- वेन पर्वतो वह्निव्याप्यालोकवानित्यादिज्ञानेषु मानस- व्याप्यो जातिविशेषः सिध्यति। न चाक्षुषत्वादिना कर इत्याहुस्तन्न । पर्वतचाक्षुषसामग्रीसत्त्वेन मान- ानानुपपत्त्या पर्वतो वह्निमानित्यनुमित्यभावापत्तेः । च पर्वतो द्रव्यमित्याद्यनुमितिजनकत्वेन तज्जनकप- मर्शेषु तादृशजातिसिद्धौ तया सङ्करापत्तेरिति दिक् ।

परे तु पर्वतो वह्निमानित्यनुमितौ वह्न्यभाववद्- त्तिमान्पर्वत इति निश्चयो हेतुः वह्निव्याप्यधूमवान् त इति ज्ञानोत्तरं वह्न्यभाववदवृत्तिमान् पर्वत इति नादेवानुमितिरित्याहुस्तन्न । धूमो वह्निव्यभिचारी तो धूमाभाववान् इत्यादिज्ञानानामप्रतिबन्धकत्वाप- । वह्निव्याप्यधूमवान् पर्वत इति ज्ञानं वह्न्यभाववद्- त्तिमान् पर्वत इति ज्ञाने हेतुः । तत्र तेषां प्रतिबन्धक- ऽपि न हेत्वाभासत्वमनुमितेस्तत्कारणस्य च साक्षात्प्र- बन्धकस्यैव हेत्वाभासत्वात् । किं च धूमादेरपि सम- येन साध्याभाववति वृत्तित्वेन संयोगसंबन्धेनावृत्ति- ं वाच्यं तथा च वह्निमानेतत्त्वादित्याद्यननुगतत्वात् ।

अत्र केचित् वह्नेर्ज्ञानलक्षणासन्निकर्षात् चक्षुषैव र्वतो वह्निमानित्यादिविशिष्टबुद्ध्या प्रवृत्त्याद्युपपत्तेर्न च- ानु... मितिर्मानम् । न चाभेदातिरिक्ते संसर्गेऽनुव्यवसे-

गो हेतुः । अयं दण्डीत्यादिप्रत्ययमिज्ञायामभेद
दण्डिन एव प्रकारत्वं दण्डिनि च दण्डस्य प्रक
व्यभिचारः । रजतारोपे चाभेदसंबन्धेन रजतस्य
त्वाञ्च व्यभिचार इति वाच्यम् । संयोगसंबन्धेन
कारकप्रत्यभिज्ञाने बाधकाभावेन तत्र व्यभिच
नाभावाच्च । अत एव नियमान्तरमपि परास्तम्

न चाव्यवहितदण्डे पुंसि दण्डीति चाक्षुषज्ञा
रिति वाच्यम् । दण्डाज्ञानदशायां कारणाभात् ।
दण्डाभावज्ञानस्य सत्त्वे संशयात्मकस्येष्टत्वाच्चि
दण्डाभावज्ञानासत्त्वे वा निश्चयात्मकस्यापीष्टत्वा
तथा नियमः पर्वतो वह्निमदभिन्न इति ज्ञाने बा
वात्,मानसज्ञानेन वा चरितार्थत्वाच्च । तत्र नियम
न्तबाधितत्वाच्च । न चानुमिनोमीत्यनुभवसिद्धो
शेषः । यत्रान्वयव्यतिरेकाभ्यां परामर्शः कारणं
साक्षात्कारत्वं साक्षात्करोमीति प्रत्ययाभावात्,
क्षात्करोमीति प्रत्ययाच्चेति वाच्यम् । साक्षात्करो
लौकिकविषयताया एव विषयत्वात् । अनुमि
प्रत्ययस्य स्ववासनाकल्पितस्यापामरसाधारणस्य
त् । न च पर्वतांशे लौकिकविषयतासत्त्वे पर्वतं स
रोमीति प्रत्ययापत्तिः । इष्टत्वात् । अत एव चा
मय्या बलवत्त्वान्मानसज्ञानासम्भवेऽपि न
एतेनाप्रसिद्धसाध्यकानुमितिरूपं ज्ञानं प्रत्यक्षा
श्यकम् । तन्न । साध्यप्रकारकं प्रत्यक्षं साध्यज्ञान
न्न साध्यविशेष्यकम् । साध्येन सन्निकर्षाभावादि
स्तम् । जलव्यापकपृथिवीत्वाभावप्रतियोगिपृथिवं

ऽभवात् । अत एवाप्रसिद्धिसाध्यकानुमितेः साध्यविशे
ऽध्यकत्वमेवेति नियमोऽपि परास्तः ।

न च व्यापकतायां भेदज्ञानेऽपि जलभेदस्याज्ञाना
तस्य भानमिति वाच्यम् । भेदत्वसामान्यलक्षणया तस्य
पि ज्ञानात् । अत एव पर्वतीयवह्निज्ञानाभावान्न पर्वतो व
ह्निमान् इति प्रत्यक्षमित्यपास्तम् । न चैवमनुमित्यनुरोधे
तस्यावश्यकत्वात् । न च पर्वतो वह्निमान्न वेति संशया
त्तिरिति वाच्यम् । परामर्शस्यैव तत्र प्रतिबन्धकत्वात् ।
च शाब्दज्ञानेऽपि मानाभावः । मानसप्रत्यक्षस्य तत्र
संभवादिति वाच्यम् । संशयानन्तरं निश्चयात्मकस
जायमानस्य प्रत्यक्षत्वासंभवात् । एतेनानुमितिं प्र
परामर्शादेः कारणत्वम् । समाने विषये प्रत्यक्षसामग्र
भिन्नविषये चानुमितिसामग्र्याः प्रतिबन्धकत्वकल्प
मपि निरस्तमिति दिक् ।

नन्वनुमितिजनकज्ञानविषया व्याप्तिर्न साध्यात्य
न्ताभाववदवृत्तित्वं, पर्वतीयवह्न्यत्यन्ताभाववदवृत्तित्वे
धूमादावव्याप्तेः । नापि साध्यतावच्छेदकावच्छिन्नस
ध्यात्यन्ताभाववदवृत्तित्वम् । समवायेन वह्नित्वावच्छि
न्नाभावस्य धूमवत्यपि सत्त्वेनाव्याप्तेः । नापि साध्यता
वच्छेदकसंबन्धेन तादृशसाध्यात्यन्ताभाववदवृत्तित्वं मू
वृक्षे कपिसंयोगोऽग्रे नेत्यबाधितप्रतीत्या समवायेन क
संयोगत्वावच्छिन्नाभावस्य वृक्षे सत्त्वेन कपिसंयोगी ए
वृक्षत्वादित्यत्राव्याप्तेः । अत एव साध्यतावच्छेदकसंबन्
साध्यतावच्छेदकावच्छिन्नसाध्यवदन्यावृत्तित्वमपि न

दिश्राऽव्याप्तेः । न च प्रतियोग्यधिकरणावृत्तित्वं
भावस्य प्रतियोग्यवृत्तित्वेनान्योन्याभावस्य f
त्वयोरत्यन्ताभावान्योऽन्याभावयदितयो र्निर्दे
वाच्यम् । कपिसंयोग्येतत्त्वादित्यत्राऽव्याप्तेः । अ
विद्यमानयोः कपिसंयोगतत्त्वोश्चात्यन्ताभाव
भावयोरेकत्वेन प्रतियोग्यधिकरणे प्रतियोगिनि
त्तित्वेन तादृशात्यन्तान्योऽन्याभावयोरप्रसिद्धे
प्रमेयत्वादिसाध्यके तादृशात्यन्ताभावान्योऽन्य
रप्रसिद्धत्वेनाव्याप्तिः । अत एव साध्यतावच्छेद
साध्यतावच्छेदकावच्छिन्नसाध्यानधिकरणवृत्ति
वृत्ते यस्तद्वति हेतुतावच्छेदकसंबन्धेन हेतुताव
च्छिन्नस्यावृत्तित्वमपि परास्तमिति चेत् ।

अत्र केचित्, अनुमितिकारणज्ञानविष
निर्वचनमिदम् । अन्यथा धूमादौ धूमत्वादिं
व्याप्यत्वव्यवहारोपपत्तेरितरवैयर्थ्यम् । अनुमि
ज्ञानविषयो न धूमत्वमात्रम् । धूमवानिति ज्ञा
मित्यापपत्तेः । तथा च केवलान्वयिसाध्यस्यानु
वात्तत्र तादृशव्याप्तेरभावेऽपि न क्षतिरित्याहु
पर्वते वह्निमनुमिनोमीतिवदिह मेयत्वादिक
मीति प्रतीत्या केवलान्वयिनोऽप्यनुमितिस्वीक
च साध्याभावाप्रसिद्धा साध्यसंशयरूपपक्ष
भावान्नानुमितिरिति वाच्यम् । साध्यसंदेहस्य प
नङ्गीकारात् । किं च साध्याभाववति हेतुतावच्छ
न्धेन हेतोरवृत्तित्वमवश्यं वाच्यम् । अन्यथा व
वति स्वावयवे समवायेन धूमादेर्वृत्तित्वेनाव्याप्त

ने हेतुतावच्छेदकसम्बन्धेन वृत्तित्वाप्रसिद्ध्या तादृशा-
सत्त्वाभावाप्रसिद्धेः । अत एव न हेतुतावच्छेदकसंब-
न हेत्वधिकरणावृत्तिसाध्यतावच्छेदकसंबन्धावच्छिन्न-
भावकत्वम् । ज्ञेयत्ववान्मेयत्वादित्यत्राव्याप्तेः ।

परे तु केवलान्वयिनि साध्यात्यन्ताभाववदलीकमेव
सते तदवृत्तित्वज्ञानादेवानुमितिरित्याहुः । तन्न । असद-
[ा]र्थविषयकज्ञानकारणाभावादसत्ख्यातेरभावात् ।

अन्ये तु वन्ह्याद्यत्यन्ताभावादौ प्रतियोगितासंबन्धेन
यत्वभ्रमदशायां प्रमेयत्वाभाववदवृत्तिधूमवान् पर्वत
[इ]ति ज्ञानाद् धूमादिना प्रमेयत्वानुमानम् । न चायथार्थ
[परा]मर्शजन्यत्वेनानुमितेर्भ्रमत्वापत्तेः । साध्यवद्विशेष्यक-
[परा]मर्शस्यैव यथार्थानुमितिजनकत्वात्तस्य च तत्रापि
[सत्त्व]ादित्याहुः । तन्न प्रमेयत्वादावत्यन्ताभावाप्रतियोगि-
[त्वज्ञ]ानदशायां स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभा-
[वत्व]ावच्छेदेनाभावे प्रतियोगितया प्रमेयत्वाभावज्ञानद-
[श]ायां वात्यन्ताभावे प्रतियोगितया प्रमेयत्वभ्रमासंभ-
[वात्] । तादृशज्ञाने तादृशज्ञानस्य प्रतिबन्धकत्वात् ।

ये तु अत्यन्ताभावे प्रतियोगितासंबन्धेन प्रमेयत्वा-
[भाव]ज्ञानं समानप्रकारकमेव तादृशव्याप्तिज्ञाने प्रतिबन्ध-
[कमित्या]हुः । तन्न । प्रमेयत्वं नास्तीति ज्ञानस्यैव प्रतियोगि-
[तया]ऽत्यन्ताभावे प्रमेयत्वज्ञानत्वेन तादृशज्ञानस्याप्यर्थ-
[त]ाप्रतिबन्धकत्वात् । न च प्रमेयत्वादावत्यन्ताभावा-
[प्रत]ियोगित्वज्ञानदशायां न तदनुमितिरिति वाच्यम् ।
[तथा]भवापलापे सर्वदा प्रमेयत्वानुमितेरप्यपलापापत्तेः ।

त्वरूपद्रव्यमात्रसमवेताभावत्वरूपप्रतियोगितावच्छेदकाव
च्छिन्नानधिकरणहेत्वधिकरणवृत्तित्वेन प्रतियोगिव्यधि
करणत्वेन साध्यतावच्छेदकस्य तत्प्रतियोगितावच्छे
दकत्वात् । नापि स्वीयं यत्प्रतियोगितावच्छेदकं तद
वच्छिन्नानधिकरणत्वं द्रव्यत्वाभाववान् सत्त्वादित्यत्रा
तिव्याप्तेः । द्रव्यत्वरूपाभावस्य द्रव्यत्वाभावत्ववन्नि
त्यवृत्तित्वविशिष्टद्रव्यत्वाभावत्वमपि प्रतियोगितावच्छेद
तदवच्छिन्नाधिकरणमेवानित्यद्रव्यम् । एवं नित्यद्रव्यमपि
अनित्यवृत्तित्वविशिष्टद्रव्यत्वाभावत्वरूपप्रतियोगिताव
च्छेदकावच्छिन्नाधिकरणमेवेति न द्रव्यत्वरूपाभावः प्रति
योगिव्यधिकरणः किं त्वन्यस्तत्प्रतियोगितानवच्छेदक
त्वात् साध्यतावच्छेदकस्य । नापि प्रतियोगितावच्छेद
कावच्छिन्नं यत्किंचित् तदनधिकरणत्वम् । कपिसंयोग्येत
त्त्वादित्यत्राव्याप्तेः । कपिसंयोगाभावस्यापि स्वप्रतियोगि
तावच्छेदकं कपिसंयोगत्वं तदवच्छिन्नस्य यस्य कस्य चित्
संयोगस्यानधिकरणहेत्वधिकरणे वृत्तेरिति परास्तम् ।

ननु प्रमेयवह्निमान् सत्त्वात्, घ्राणग्राह्यगुणवान् द्रव्य
त्वादित्यत्रातिव्याप्तिः । यादृशप्रतियोगित्वावच्छेदकाव
च्छिन्नानधिकरणं यद्धेत्वधिकरणं तन्निष्ठाभावतादृशप्रति
योगितायां लाघवेन वह्नित्वगन्धत्वादेरवच्छेदकत्वेन सा
ध्यतावच्छेदकस्य प्रमेयवह्नित्वघ्राणग्राह्यगुणत्वादेरनव
च्छेदकत्वादिति चेत् । न । गुरुधर्मस्यापि प्रतियोगिताव
च्छेदकत्वात् ।

केचित्तु प्रतियोगितावच्छेदकाभाववत्त्ववृत्त्यपि प्र
तियोगितावच्छेदकत्वमाहुः । तन्न । सत्तावान् द्रव्यत्वा
दित्यत्राव्याप्तेः । विशिष्ट [illegible]

अपरे तु गुरुधर्मस्य स्वरूपसंबन्धरूपप्रतियोगिताव-
दकत्वाभावपक्षे यादृशेत्यादिनोक्तप्रतियोगितावच्छे-
यद्धर्मविशिष्टसंबन्धिनिष्ठप्रतियोगिन्यधिकरणाभाव-
योगितावच्छेदकं तद्भिन्नं यत्साध्यतावच्छेदकं तद-
च्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । यद्धर्मविशिष्ट-
न्धिनिष्ठाभावप्रतियोगिताश्च विशिष्य ग्राह्याः । अतः
यवह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छे-
त्वस्य प्रतियोगितावच्छेदकत्वाभावेऽपि न क्षतिरि-
हुः ।

ननु महाकालनिष्ठविशेषणतया घटादेः साध्यतायां
येत्यादिना कालपरिमाणादेर्हेतुत्वेऽव्याप्तिः । प्रतियो-
ावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणहेत्वधिकरण-
ाभावप्रतियोगितायाः समवायसंबन्धेन घटादिनि-
याः प्रसिद्धावपि तत्प्रतियोगितायाः साध्यतावच्छेदक-
न्धावच्छिन्नत्वाप्रसिद्धेः । साध्यतावच्छेदकसंबन्धेन प्र-
ोग्यनधिकरणहेत्वधिकरणविवक्षया पक्षेऽपि वृत्तिम-
त्रस्य तेन संबन्धेन महाकाले वृत्तित्वात्तदभावस्य
ध्यतावच्छेदकसंबन्धेन प्रतियोग्यधिकरणे हेत्वधिक-
वृत्तित्वेन लक्षणाघटकत्वात् । अवृत्तेस्तेन संबन्धेना-
करणाप्रसिद्ध्या तदभावस्यापि लक्षणाघटकत्वात् । न
साध्यतावच्छेदकसंबन्धेन यत्किंचिद्धेत्वधिकरणावृ-
त्वं यादृशप्रतियोगितावच्छेदकावच्छिन्ने विशेषणम् ।
ा चावृत्त्यभावस्यैव लक्षणघटकत्वान्न व्याप्तिरिति
व्यम् । सत्तावान् प्रमेयत्वादित्यादावतिव्याप्तेः ।
ध्याभावस्य तेन संबन्धेन हेत्वधिकरणे यत्र क्वापि

तृणघटकत्वात्साध्यतावच्छेदकस्य तत्प्रतियोगितानवच्छे-
दकत्वात् ।

न च महाकालभेदविशिष्टघटाभाव एव तादृश
महाकालस्य घटाद्यधिकरणत्वेऽपि महाकालभेदविशिष्टघ
टानधिकरणत्वान्महाकाले महाकालभेदाभावादिति
वाच्यम् । महाकालस्य दैशिकविशेषणतया महाकालभे-
दानधिकरणत्वेऽपि कालिकविशेषणतया महाकालभेदा-
धिकरणत्वान्महाकाले सर्वमिति प्रतीतेः । तथा च महा-
कालभेदविशिष्टघटाधिकरणत्वं कालिकविशेषणतया का-
लेऽस्त्यव्याप्तिरिति चेत् ! न ।

साध्यतावच्छेदकसंबन्धसामान्ये यदभावयादृशप्र-
तियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वधिकरणीभूत-
कैंचिदन्यतरत्वानुयोगिकत्वाभयाभाववत्तादभावतादृशप्र-
तियोगितावच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसा-
ध्यसामानाधिकरण्यं व्याप्तिः । कालो घटवान् कालपरि-
माणादित्यत्राकाशाभावस्तादृशः साध्यतावच्छेदकका-
लिकसंबन्धसामान्ये आकाशत्वावच्छिन्नप्रतियोगिकत्व-
कालानुयोगिकत्वोभयाभावसत्त्वादिति केचित् ।

तन्न । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वानङ्गीका-
रे तादृशाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसं-
बन्धनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छे-
दक तद्भिन्नसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधि-
करण्यं व्याप्तिर्वाच्या । तथा च पारिभाषिकावच्छेदकत्वस्य
आकाशत्वादावप्रसिद्धेः । किं च गगनादेः स्वरूपसंब-

परे तु प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिताव-
ावच्छिन्नानधिकरणं हेतुतावच्छेदकसंबन्धेन यद्धे-
च्छेदकावच्छिन्नाधिकरणं तन्निष्ठाभाववत्तादृशप्रतियो-
सामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभ-
वस्तेन संबन्धेन तद्धर्मावच्छिन्नं तद्धेतुतावच्छेदकाव-
व्यापकम् । भवति हि समवायादिना घटत्वाद्यव-
ानधिकरणमहाकालपरिमाणाधिकरणमहाकालनि-
वायादिना घटाद्यभावप्रतियोगितासामान्ये घट-
वच्छिन्नत्वकालिकसम्बन्धावच्छिन्नत्वोभयाभाव-
त् कालिकसंबन्धेन घटत्वाद्यवच्छिन्नं कालपरिमाण-
कम् ।

यद्यपि संयोगेन रूपादेर्धर्ममात्राव्यापकत्वापत्तिः
ोन रूपाधिकरणाप्रसिद्ध्या संयोगेन रूपाद्यभावादे-
ाघटकत्वेन लक्षणप्रविष्टघटाद्यभावप्रतियोगितासा-
रूपत्वावच्छिन्नत्वसंयोगसंबन्धावच्छिन्नत्वोभया-
सत्त्वात्तथापि व्यापके तेन संबन्धेन वृत्तित्वं व्याप-
च्छेदके वा तत्संबन्धावच्छिन्नाधेयतावच्छेदकत्वं
म् । तेन वन्हिरूपोभयत्वादिना न वन्ह्यादेः संयो-
मव्यापकत्वम् ।

ननु प्रमेयवन्हिमान् धूमादित्यत्राव्याप्तिः । प्रमेय-
त्वस्य गौरवेणानवच्छेदकतया तदवच्छिन्नत्वाप्रसि-
तादृशप्रतियोगितासामान्ये उभयाभावासंभवात् ।
यद्धर्मान्यूनवृत्तिधर्मावच्छिन्नत्वाभाववदितोभया-
लक्षणघटक इति वाच्यम् । सत्तावान् जातेरित्य-
प्तेः । [illegible]

वृत्तिविशिष्टसत्तात्वावच्छिन्नत्वेसत्त्वेन तादृशप्रतियो-
तासामान्ये उभयाभावासत्त्वात् । न च हेतुमन्निष्ठता-
ााभावप्रतियोगितासामान्ये यद्धर्मान्यूनवृत्तिधर्माव-
च्छिन्नत्वाभाव एव लक्षणघटकः । यद्धर्मावच्छिन्नं यद्धर्मा-
च्छिन्नाभाववति अवृत्ति तद्धर्मस्य स धर्मोऽन्यूनवृत्तिः
शिष्टसत्तात्वं तु न सत्तात्वान्यूनवृत्तिविशिष्टसत्तात्वा-
च्छिन्नाभाववति सत्तात्वावच्छिन्नस्य वृत्तेरिति वाच्य-
। विशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तेः । विशि-
त्तात्वस्यापि विशिष्टसत्तात्वान्यूनवृत्तित्वाभावा-
ते चेत् ॥

न प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छे-
वच्छिन्नानधिकरणं हेतुतावच्छेदकसंबन्धेन हेतुता-
दकावच्छिन्नाधिकरणं तन्निष्ठाभावतादृशप्रतियोगि-
ामान्ये यद्धर्मविशिष्टसंबन्धिनिष्ठप्रतियोगिव्यधिकर-
ावप्रतियोगितानवच्छेदकावच्छिन्नत्वयत्संबन्धाव-
त्त्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नं तस्य
कमिति । अत एव न संयोगेन रूपादेर्धर्मव्याप-
[। अत्र कालो घटवान् कालपरिमाणादित्यत्राप्रसि-
रासः । संबन्धविवक्षा च स्वयमूहनीयेति वदन्ति ।
अन्ये तु साध्यसंबन्धितावच्छेदकं रूपं व्याप्तिः ।
ेदकत्वं च स्वरूपसंबन्धविशेष इति ।

ननु मूले वृक्षः कपिसंयोग्यग्रे वृक्षः कपिसंयोगी नेति
कपिसंयोगतदन्योऽन्याभावस्यापि वृक्षे सत्त्वेन
ोग्येतद्वृक्षत्वादित्यत्राव्याप्तिः । कपिसंयोगानधिक-
ज्ञनिष्ठाभावप्रतियोगिता[illegible]

ोगात्यन्ताभाव एव तत्प्रतीतिविषयः। प्रत्यक्षप्रतीतौ
ैषयत्वेऽपि शाब्दप्रतीतौ तद्विषयत्वाभावात्। अनुयो-
ादे सप्तमीं विना नञा प्रातिपदिकार्थात्यन्ताभावाबो-
ात्। अत एव न पचतीत्यादावत्यन्ताभावबोधेऽपि न
तेरिति चेत्?

अत्र केचित् वृक्षः कपिसंयोगी नेत्यादिप्रतीतेर्विशे-
ात्यन्ताभावविषयत्वेनोपपत्तेरन्योन्याभावस्य प्रतियो-
ावच्छेदकेन सामान्यत एव विरोधात्तस्याऽव्याप्यवृ-
त्वम्। वृक्षेऽग्रे कपिसंयोगो नेत्यादिप्रतीतेः कपिसंयोग-
न्योन्याभावेन कपिसंयोगत्वात्यन्ताभावेन कपिसंयो-
न्योऽन्याभावेन चोपपादयितुमशक्यत्वात्। प्रतियोगि-
वच्छेदकरूपेण नियमतः प्रतियोगिनोऽनुपस्थितेः। मूले
। कपिसंयोगो नेति प्रत्ययापत्तेश्च। कपिसंयोगात्यन्त-
भावविषयत्वेन प्रतियोगिना विशिष्टैवात्यन्ताभाव-
ोधित्वकल्पना तस्याव्याप्यवृत्तित्वम्। न चोक्तशाब्द-
ीतेरत्यन्ताभावविषयत्वानुपपत्तिरिति वाच्यम्। तत्र
पेसंयोगिपदस्य तात्पर्यग्राहकत्वेन नञः कपिसंयोगा-
न्ताभाववति लक्षणया तदत्यन्ताभाववद्भेदस्याङ्गीको-
त्यन्ताभावविधेयकबोधे एव सप्तम्यपेक्षणात्। यद्वा
पदस्य तात्पर्यग्राहकत्वात् संयोगिपदस्य संयोगात्यन्त-
भाववति लक्षणया तथा बोधादिति वदन्ति।

अपरे तु अन्योऽन्याभावस्य प्रतियोगितावच्छेदका-
समानाधिकरणत्वेन स्वस्वप्रतियोगितावच्छेदकेन
ोधस्यावश्यं वक्तव्यत्वादुक्तप्रतीत्या प्रकृते विरोधस्या-
[illegible]

धिकरणभेदस्य लक्षणे निवेशात् । न च कपिसंयोगी ए
त्वादित्यत्राव्याप्तिः । कपिसंयोगिभेदस्य प्रतियोगि
तत्वेन लक्षणाघटकत्वादिति वाच्यम् । हेतुसाध्यभेदे
याप्तेर्भिन्नतया सत्तामादाय कपिसंयोगव्याप्तेर्लक्षणाक्र
ात् । अधिकरणतया व्याप्यवृत्तित्वस्वीकारेण संयो
ाधिकरणभेदस्य प्रतियोग्यवृत्तिना गुणे सत्त्वादव्याप्तिव्या
रभावादित्याहुः ।

ननु वह्निमान् धूमादित्यत्राव्याप्तिः । सामान्या
ावे मानाभावेन वह्नित्वावच्छिन्नत्वाप्रसिद्धा तादृशप्र
ियोगितायामुभयाभावासम्भवादिति चेत् । न । ह्रदे व
ह्निर्नास्तीति प्रतीत्या तत्सिद्धेः । न च विशेषाभाव एव
त्प्रतीतिविषयः । वह्निमत्यपि वह्निर्नास्तीति प्रतीत्या
त्तेः । न च यावदभावानां तत्प्रतीतिविषयत्वम् । गौरवात्
दादौ वह्निप्रागभावादेरभावेनासम्भवित्वाच्च । न च
दाद्यवच्छेदेन विशेषाभावेष्वेव वह्नित्वावच्छिन्नप्रति
गित्वस्वीकाराद् वह्नित्वावच्छिन्नप्रतियोगिताकत्वेन
शेषाभावस्य तत्प्रतीतिविषयत्वम् । अतिरिक्तप्रतियो-
ताकल्पने किमपराद्धमतिरिक्ताभावेन ? किं च रूपा-
कं प्रति रूपादेः समवायेन प्रतिबन्धकत्वेन तदवच्छिन्न-
भावस्य कारणत्वेन तत्सिद्धिरित्याहुः ।

वस्तुतस्तु सामान्याभावानङ्गीकारपक्षेऽपि विशेषा-
वेष्वेव वह्नित्वावच्छिन्नप्रतियोगितायाः स्वीकाराद्या-
प्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं
दृशप्रतियोगिता सामान्यनिविष्टा न वह्नित्वावच्छिन्ना
तियोगिता किं च ...

म् । नन्वस्तूक्ता व्याप्तिस्तथापि तद्ग्राहकाभावाज्ज्ञा-
नं प्रमाणं स्यादिति चेत् । न । व्यभिचारज्ञानविरह-
कृतसहचारज्ञानस्यैव व्याप्तिप्रत्यक्षे हेतुत्वात् । यद्यपि
संशयस्याप्रतिबन्धकत्वाच्च व्यभिचारसंशयस्य प्रति-
कत्वं तथाप्यन्वयव्यतिरेकाभ्यां व्यभिचारसंशयस्य
प्तिप्रत्यक्षे प्रतिबन्धकत्वम् । सहचारज्ञानं तु विशेषण-
त्वेन व्याप्तिविशिष्टज्ञाने हेतुः ।

अपरे तु विरुद्धसहचारभ्रमेण व्याप्तिप्रत्यक्षस्य जाय-
त्वादन्वयव्यतिरेकाभ्यां व्याप्तिप्रत्यक्षे तज्ज्ञानं हेतुः ।
था विशेषणान्तरज्ञानस्यापि हेतुत्वकथनापत्तिरि-
ः ।

ननु तथापि पर्वतीयधूमे वह्निव्याप्त्यग्रहे कथं
प्तिविशिष्टपक्षधर्मताज्ञानमिति चेत् । न । धूमत्वादि-
न्यलक्षणया सकलधूमाद्युपस्थितौ सर्वत्रैव धूमे
ग्रहात् । सा चेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं
न्यं तज्ज्ञानं वा । ननु सामान्यलक्षणया सकलधूमज्ञा
कारे सकलधूमानां चाक्षुषापत्तिरिति चेत् । न ।
ानधूमत्वसामान्यलक्षणाजन्यसर्वधूमचाक्षुषे धूम-
नजन्ये तादृशचाक्षुषे वा धूमत्वप्रकारतानिरूपित-
यताश्रयलौकिकचाक्षुषसामग्र्या हेतुत्वात् ।

अन्ये तु वह्निरिन्द्रियस्य लौकिकः सम्बन्धो ज्ञानस्य
न्द्रियजन्यत्वं नियामकमित्याहुः ।

ननु महानसीयधूमे पर्वतीयधूमे पूर्वोक्तधूमत्वरूप-
क्येन तस्याः स्मरणेन पर्वते व्याप्तिविशिष्टपक्षधर्म-

नस्य विशेष्यतया हेतुत्वेनासिद्धत्वज्ञानार्थं सामा
न्यास्वीकारादिति दिक् ।

ननु साध्यव्यापकसाधनाव्यापकोपाधिज्ञानाद्
भिचारज्ञानमिति न व्याप्तिनिश्चयः । न च वह्नि
धूमादित्यादौ साध्यव्यापकसाधनाव्यापकस्याप्रसि
तज्ज्ञानं सम्भवतीति वाच्यम् । साध्यव्यापकत्वेन ज्ञ
साधनाव्यापकत्वज्ञानसम्भवादिति चेत् । न । साध्य
पकत्वेन ज्ञातेष्वनुकूलतर्केण साधनव्यापकत्वसाधन

ननु साध्यव्यापकत्वेन साधनाव्यापकत्वेन नि
स्य वह्निधूमव्यभिचारी धूमव्यापकार्द्रेन्धनव्यभिचारि
दित्याद्यनुमाने पक्षे हेतुनिश्चयकारोपयोगित्वेन वह्नि
व्यभिचारी आर्द्रेन्धनव्यभिचारित्वादित्याद्यनुमाने
व्यापकव्यभिचारे व्याप्यव्यभिचारावश्यम्भावादिति
कोत्थापकत्वेन वा साध्यव्यभिचारज्ञानेऽपयोगित्वम्
साध्यव्यापकत्वेन निश्चितसाधनाव्यापकत्वसंशयरूपे
धित्वसंशयस्यापि व्याप्यसंशयस्य व्यापकसंशयोपये
त्वेन साध्यव्यापकोपाधौ साधनाव्यापकत्वसंशयस
व्याप्यसंशयस्य व्यापकसंशयोपयोगित्वेन साध्यव्या
पाधौ साधनाव्यापकत्वसंदेहे सति साधनेऽपि तद्व
चारसंदेहात् साध्यव्यापकव्यभिचारस्य साध्यव्यभि
व्याप्यत्वेनारु साध्यव्यभिचारसंशयोपयोगित्वम् ।
धनाव्यापकत्वेन निश्चितेषु साध्यव्यापकत्वसंशयरूपे
धित्वसंशयस्य तु कथं न साध्यव्यभिचारज्ञानोपयोगि
मिति चेत् । न । साधनाव्यापके साध्यव्यापकत्वसन्दे
साध्ये साधनाव्यापकव्याप्यत्वसंशयपर्यवसन्नतया

: साध्ये साधनाव्यापकत्वसंशयः । स एव साध्यं
निसमानाधिकरणाभावप्रतियोगि न वेति व्यभि-
संशय इति तस्यापि व्यभिचारज्ञानोपयोगित्वात् ।

ननु साध्यव्यापकः साधनाव्यापको नोपाधिः ।
: प्रत्यक्षः प्रमेयत्वादित्यत्रोद्भूतरूपोपाधावव्याप्तेः ।
पक्षधर्मावच्छिन्नसाध्यव्यापकत्वं वाच्यम् । तस्यापि
द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकत्वान्नोक्तदोष इति वाच्यम् ।
: श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वोपा-
व्याप्तेः । न च साधनावच्छिन्नसाध्यव्यापकत्वं वाच्यं
तत्राप्यस्तीति वाच्यं । पूर्वोक्तोपाधावव्याप्तेः । न च
किंचिद्धर्मावच्छिन्नसाध्यव्यापकत्वं वाच्यं तच्चोक्तस्थले
स्तीति वाच्यम् । वह्निमान् धूमादित्यत्र महानसत्वा-
पाधितापत्तेः । तस्यापि महानसरूपावच्छिन्नसाध्यव्या-
त्वात् । न च यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्माव-
न्नसाधनाव्यापकत्वं वाच्यं । तच्चोक्तोपाधिष्वपि न
हानसत्वे तस्य तद्धर्मावच्छिन्नसाधनव्यापकत्वादिति
यम् । एतद्घटो रूपवान् पृथिवीत्वादित्यत्र एतद्घ-
त्वे ऽतिव्याप्तेः । तस्यैतद्घटोत्पत्तिकालावच्छिन्नरूप-
पकत्वादेतद्घटोत्पत्तिकालावच्छिन्नपृथिवीत्वाव्याप-
ादिति चेत् ।

अत्र केचित् यद्धर्मसमानाधिकरणसाध्यव्यापकता
र्मसमानाधिकरणसाधनाव्यापकता वाच्या । तच्चोक्तैत-
ान्यत्वे नास्ति । एतद्घटोत्पत्तिकालसमानाधिकरण-
ति एतद्घटे एतद्घटान्यत्वस्यासत्त्वान्नोक्तदोष इति ।

नाधिकरणद्रव्यत्वाव्यापकत्वात् । न च तस्य तादर्थ्यत्व
ेति वाच्यम् । तान्त्रिकाणां तत्रोपाधिव्यवहाराभाव
यदि च गुरु रूपादित्यत्रैव पृथिवीत्वाभावेनोपाधि
हारः । न तु रूपवान् द्रव्यत्वादित्यत्र तदा तल्लक्षण
समीचीनम् । अत्र साधनं व्यभिचारि बोध्यम् । तेन र
वान् पृथिवीत्वादित्यत्र घटत्वाभावस्य पटत्वसमाना
करणसाध्यसाधनयोर्व्यापकत्वाव्यापकत्वयोः सत्वे
नोपाधित्वं ; गुरु रूपात्, रूपवान् द्रव्यत्वादित्यत्र पृथि
त्वाभावस्यानुपाधित्वात् । स्वानधिकरणसाधनाधिक
वृत्तिधर्मसमानाधिकरणसाध्ये व्यापकत्वं च । न च पृ
वीत्वाभावव्यभिचारस्य पृथिवीत्वादौ सत्वात् त
रूपव्यभिचाराभावेन पृथिवीत्वाभावस्य स्वव्यभिचा
साधने साध्यव्यभिचारानुमापकत्वेन कथमुपाधि
तत्रेति वाच्यम् । द्रव्यत्वं रूपव्यभिचारि जलसमवेत
त्यत्वे सति पृथिवीत्वाभावव्यभिचारित्वादित्यादिप्र
रेण तस्यापि व्यभिचारोन्नायकत्वात् । पृथिवीत्वादौ व
भिचारवारणाय सत्यन्तम् । पृथिवीजलसंयोगे व्यभि
रवारणाय नित्येति । पृथिवीजलमात्रवृत्तिभेदे व्यभिच
वारणाय समवेतेति । जलत्वे व्यभिचारवारणाय पृथि
त्वाभावव्यभिचारित्वेति दिक् ।

ननु गुरु रूपादित्यत्र पृथिवीत्वाभावस्यानुपाधि
न बीजमिति चेत् ? न । उपाधिव्यभिचारवति सा
साध्यव्यभिचाराभावेन स्वव्यभिचारेण साधने सा
व्यभिचारानुमापकत्वात् । अत एव जलसमवेतनित्य
सति पृथिवीत्वाभावव्यभिचारित्वा... [illegible]

ाित्वाभावव्यभिचारित्वादित्यादिना वा साध्यव्यभि
ारानुमानमपि निरस्तम् ।

ननु वह्निव्याप्यधूमवन्महानसमिति ज्ञानान्मह
ासे वह्न्यनुमित्यापत्तिः । न च पक्षतायास्तत्राभावान्न
ुमितिरिति वाच्यम् । सा च न साध्यतदभावकोटिक
न्देहः । साध्यं पक्षनिष्ठाभावप्रतियोगि न वेति सन्देहा
ुमित्यभावापत्तेः । नापि साध्ये पक्षनिष्ठाभावप्रतियो
गित्वतदभावकोटिकः सन्देहः । पक्षः साध्यवान् तदभ
वान् वेति संशयादनुमित्यभावापत्तेः । नापि पक्षे स
धतावच्छेदकसंबन्धेन साध्यतावच्छेदकरूपेण साध्यवि
यनिवर्त्यो यः संशयः तेन संबन्धेन तेन रूपेण साध्य
ुमितौ पक्षतेति वाच्यम् । व्याप्तिस्मरणेन संशयस्य नाशे
ानुमितेः पूर्वं संशयाभावात् । अप्रसिद्धसाध्यकस्थले संश
ाभावाच्च । नापि साध्यनिश्चयाभावः । निश्चितेऽ
नुमानं ...
ऽषाधयिषयानुमित्युत्पत्तेः । नापि सिषाधयिषाविरह
ाशिष्टसाध्यनिश्चयाभावः । सिषाधयिषाया दुर्वचत्वात्
था हि । सा हि पक्षे न साध्यानुमितिगोचरेच्छा पर्व
ह्निज्ञानं जायतामितीच्छासत्त्वे साध्यनिश्चयेऽनुमित्या
त्तेः । नाप्यनुमितित्वरूपेणानुमितिगोचरा तादृशीच्छा
त्यक्षभिन्नं पर्वते वह्निज्ञानं जायतामितीच्छयापि साध्य
ाश्चयोत्तरमनुमित्युत्पत्तेः । यत्र पक्षे साध्यविशेषस्य ता
शीच्छा न जाता तत्रानुमित्यनापत्तेश्चेति चेत् ? न । यत्र
क्षे साध्यनिश्चये सति यादृशयादृशेच्छासत्त्वे ऽनुमिति
त्र तादृशेच्छाभावविशिष्टसाध्यनिश्चयाभावः पक्षता

ननु पर्वतो वह्निमान् वह्निव्याप्यधूमवांस्तद्
प्यवांश्च वन्ह्यनुमितिर्वह्निव्याप्यधूमानुमितिरिष्टस
मेवं समूहालम्बनं ज्ञानं ततो वह्न्यनुमितिवह्निव्या
मानुमितिगोचरेच्छा ततो वह्न्यनुमितिर्वह्निव्याप्य
नुमितिस्तत्र सिषाधयिषोत्पत्तिकाले पक्षतासंपत्त्यर्थं
षाधयिषाविरहेति सिद्धेर्विशेषणमस्तु परं तु तत्र वह्न
मित्युत्तरं पुनर्वह्न्यनुमितिः स्यात् सिषाधयिषाया अ
तिकाले सत्त्वेन विशिष्टाभावसत्त्वाद्वह्निव्याप्यधूम
वह्निमान्पर्वत इत्येनुमित्यात्मकपरामर्शस्यैव सत्त्वा
चेत् ? न । स्वविषयसिद्ध्यनुपहितत्वेनेच्छाया विशे
यत्वात् ।

ननु सामानाधिकरण्येन पर्वतो वह्निमानिति सि
सिषाधयिषाविरहविशिष्टायाः सत्त्वेपि तत्रैव पर्वते
तावच्छेदकावच्छेदेन वह्न्यनुमितेर्जायमानत्वेन नेयं
ोति चेत् । न । पक्षतावच्छेदकावच्छेदेनानुमितौ यथे
सिषाधयिषाविरहविशिष्टपक्षतावच्छेदकावच्छेदेन सि
भावस्यैव पक्षतात्वात् । सामानाधिकरण्येनानुमितौ
सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । इयं च
षणतया समवायेनानुमितिं प्रति हेतुः । पर्वतत्वरूपेण प
विशेष्यकवन्हिप्रकारकनिश्चयस्य सिषाधयिषाविरहवि
ष्टस्य समवायेन तादृशवन्हिप्रकारकानुमितिं प्रतिबन
त्वात् । अत एव पर्वतत्वरूपेणैतत्पर्वते वन्हिनिश्चये
पर्वतान्तरे विनापीच्छामनुमित्यापत्तिरिति परास्तम्

यदि च तत्रेष्टापत्तिस्तदा विशेष्यतासंबन्धेन
मितौ विशेष्यतासंबन्धेन साध्यनिश्चयस्य प्रतिबन्धक

ननु पर्वतधर्मव्यापको वह्निरिति ज्ञानं पर्वतो वह्नि-
नित्यनुमितौ लाघवाद्धेतुरस्तु न तु वह्निव्याप्यधूमवान्
न इति ज्ञानं स्वाव्यवहितोत्तरपर्वतो वह्निमानित्यनु-
ौ हेतुः । सामानाधिकरण्यज्ञानस्य हेतुत्वापत्त्या हेतु-
ादनन्तकार्यकारणभावापत्त्या च गौरवादिति चेन्न ।
ः पर्वतधर्मसत्तादिसमानाधिकरणाभावप्रतियोगित्वे-
त्वधर्मसमानाधिकरणात्यन्ताभावप्रतियोगित्वत्वेन प्र-
ागित्वसामान्याभावज्ञानमप्रामाणमसम्भवि । तत्प्रति-
गित्वप्रतियोगिकाभावज्ञानं तु अतिव्यापकं पक्षधर्मधूम-
ानाधिकरणात्यन्ताभावप्रतियोगित्वत्वेन प्रतियोगि-
ामान्याभावज्ञानं च धूमव्यापको वह्निर्धूमवान् पर्वत
ज्ञानादनुमितेरव्यापकम् । कथं वा हेतुभेदेऽप्येकः कार्य-
णभाव इति विभावयेति दिक् ।

केचित्तु धूमे पर्वतवृत्तित्वज्ञानं वह्नौ धूमत्वावच्छि-
ापकताज्ञानं कारणमाहुः ।

तच्चानुमानं त्रिविधम् । केवलान्वयिकेवलव्यतिरे-
न्वयव्यतिरेकिभेदात् ।

ननु तत्रात्यन्ताभावाप्रतियोगिसाध्यकत्वं न केव-
न्वयित्वं कपिसंयोगाभाववान् वृक्षत्वादित्यादावव्या-
प्तेः । नापि व्याप्यवृत्त्यत्यन्ताभावाप्रतियोगिसाध्यक-
। व्याप्यवृत्तित्वावच्छिन्नवृत्तिकभिन्नत्वरूपत्वे कपि-
ंयोगत्वादित्यत्रातिव्याप्तेः । आकाशाभावसाध्यकस-
ाव्याप्तेश्च । नापि यत्र कुत्र चिदनवच्छिन्नवृत्तिकाभा-
प्रतियोगित्वम् । कपिसंयोगिभिन्नं गुणत्वादित्यत्राति-
प्तेः । कपिसंयोगरूपसाध्याभावस्यावच्छिन्नवृत्तिक-

ाध्यकत्वस्य केवलान्वयित्वादिति कश्चित् । तन्न । अन्ये
याभावस्याव्याप्यवृत्तित्वे कपिसंयोगात्यन्ताभाववद्वे
यापि वृक्षे सत्त्वेन कपिसंयोगाभाववानेतत्वादित्यत्र
याप्तेः । अन्योन्याभावे प्रतियोग्यवृत्तित्वविशेषणे
पिसंयोग्येतत्वादित्यत्रातिव्याप्तेः ।

अपरे तु प्रमेयत्वादिसाध्यकसद्धेतुत्वं केवलान्वयि
त्वमिति विशिष्यैव लक्षणं वाच्यम् । शब्दैक्यस्यानुपादेय
त्वादित्याहुः ।

कश्चित्तु केवलान्वयव्याप्तिमत्केवलान्वयित्वमित्याह ।
न्न । एतत्कपिसंयोगाभावेन एतद्भिन्नसंयोगाभावे साध्ये
व्याप्तेः ।

केचित्तु अन्वयसहचारमात्रगृहीतव्याप्तिकं केवला
न्वयि, व्यतिरेकसहचारमात्रगृहीतव्याप्तिकं केवलव्यति
रेकि, उभयसहचारगृहीतव्याप्तिकमन्वयव्यतिरेकि, प्राहुः

चानुमानं स्वार्थं परार्थं च । तत्र स्वार्थं तु पूर्वोक्तसहचार
ानजन्यव्याप्तिज्ञानजन्यपरामर्शरूपम् । परार्थं परप्रयुक्त
ायरूपशब्दाधीनलिङ्गपरामर्शरूपं न्यायसाध्यमिति

न्यायस्तदवयवाश्च निरूप्यन्ते ।

न्यायस्तूचितानुपूर्वीकप्रतिज्ञादिपञ्चकम् । आनुपू
र्व्यौचित्यं तु प्रतिज्ञोत्तरत्वं हेतौ, हेतूत्तरत्वमुदाहरणे
यादिकम् । उचितानुपूर्वीकत्वमात्रं प्रतिज्ञाद्युत्तरहेत्वा
रूपावयवद्वये गतमतः प्रतिज्ञादिपञ्चकमित्युक्तम् । तद्
प्र प्रतिज्ञादिपञ्चकमात्रकविशेष्यकबुद्धेर्विशेष्यतापर्याप्ति
त्वम् । तावन्मात्रं व्युत्क्रमोक्तप्रतिज्ञापञ्चकेऽप्यस्त उचि-

ध्यतापर्यान्त्यधिकरणत्वमेव लक्षणं बोध्यम् ।
कं न्यायान्तर्गतित्वशून्यं ग्राह्यं तेन नान्योन्याश्र-
। पर्वतो वन्हिमान् धूमात् यो यो धूमवान् स स
। यथा महानसः वन्हिव्याप्यधूमवानयं तस्माद्व-
इत्यादिवाक्यत्वमेव न्यायत्वमाहुः । तेषां मत्य-
द्यर्केऽपि न्यायेऽनुगमश्चिन्तनीयः । न चासाध-
कन्यायेऽव्याप्तिस्तत्र हेत्वाभासेऽसाधकतासाध-
भ्युपगततया उदाहरणानुपन्यासेन पञ्चकासं-
वाच्यम् । तत्रापि वादिना स्वकर्तव्यतया
ात् । अन्यथा यत्र हेतौ द्वयोः पक्षधर्मता निश्च-
त्यप्रदर्शनानापत्त्या तत्रत्यन्यायेऽव्याप्त्यापत्ति-
।

चेत्तु वन्ह्यादिसाध्यकन्यायस्येदं लक्षणम् । असा-
धकस्य तु चतुष्टयघटितमेव लक्षणं साध्यादिभे-
भेदादित्याहुः ।

मीमांसकानामुदाहरणान्तो न्यायः ।
बौद्धमते उदाहरणोपनयद्वयवयवकः ।

ीननैयायिकानां दशावयवकः । दशावयवास्तु
पञ्चकं, जिज्ञासा, संशयः, शक्यप्राप्तिः, प्रयोजनं,
ासश्च । संशयश्च मध्यस्थस्य वादिनोर्वा आहो-
प्राप्तिः पदवाक्यरूपप्रमाणानां ज्ञानजननप्रयो-
यस्यां कथायां यदुद्देश्यं तत्प्रयोजनम् । संशय-
र्कः । तेषां मतमपि पञ्चकमित्यनेन निरस्तम् ।
तु न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम् ।

मवयवैकदेशवारणाय विशेष्यम् । अत्र प्रतिज्ञादिकं न्य
ान्तर्गतत्वशून्यं ग्राह्यं न तु न्यायान्तर्गतत्वसहितं सर्व
ातिज्ञादौ न्यायान्तर्गतत्वप्रवेशे गौरवापत्तेः । न च प्रति
ज्ञाद्यन्यतमत्वं प्रतिज्ञाभिन्नत्वे सति हेत्वादिभिन्नं यत्तद्धि
त्वम् । न चेदं प्रतिज्ञादावस्ति प्रतिज्ञात्वस्य व्यासज्य
त्तितया तदवच्छिन्नभेदस्य प्रत्येकं वर्णे सत्त्वेन प्रतिज्ञ
भेदाभावस्य प्रतिज्ञादावसम्भवादिति वाच्यम् । एके
द्वावित्यादिप्रतीत्या उभयभेदस्य केवलान्वयित्वेऽ
न द्वावित्यादि प्रतीत्यभावेन यथा द्वित्वावच्छेदेनाभ
भेदाभावस्तथा प्रतिज्ञात्वाद्यवच्छेदेन प्रतिज्ञादिभेदा
ावादित्याहुस्तन्न । अवयवद्वये प्रतिज्ञाभिन्नं यद्धेतुभि
द्धेदस्य सत्त्वेनातिव्याप्तेः । न च तदुभयत्वावच्छेदेन प्रति
भेदे तु भेदादेः सत्त्वान्न दोष इति वाच्यम् । व्यासज्य
त्यधिकरणताकभेदास्वीकारात् । किं च प्रतिज्ञादेरेकदेशे
तिज्ञात्वाद्यवच्छिन्नभेदसत्त्वेन तद्भेदस्य प्रतिज्ञात्वावच्छे
नाभावाद्व्यासज्यवृत्त्यधिकरणताकभेदाभावाद् अस
मैवाच्च ।

केचित्तु प्रतिज्ञाद्यघटकत्वे सति उभयघटकभागद्वया
टितत्वं न्यायान्तर्गतत्वविशिष्टमवयवत्वम् । प्रतिज्ञादे
कदेशवारणाय सत्यन्तम् । अवयवद्वयादेर्वारणायोभयघ
कभागद्वयाघटितत्वमुक्तम् । उदासीनवारणाय न्याया
र्गतत्वमुक्तम् । न च प्रतिज्ञादेः पर्वत इत्यस्य धर्मिभा
स्थस्य च घटकेन पकारवकारादिना घटितत्वादसम्भव
ते वाच्यम् ।

[illegible]

यद्यपि प्रतिज्ञादिघटकत्वं प्रतिज्ञादिविषयिता-
विषयिताप्रतियोगित्वं प्रतिज्ञादावस्तीत्यसम्भव
तिज्ञादिभिन्नत्वे सति प्रतिज्ञादिविषयिताऽव्याप-
यताप्रतियोगित्वं वाच्यं, तथा च प्रतिज्ञादे-
र्वत इति पदे वन्हिमानिति पदे च प्रतिज्ञाघटके-
तिव्याप्तिस्तथापि प्रतिज्ञादावसम्भवात् । व्यास-
यधिकरणताकभेदास्वीकारेण यथा प्रतिज्ञाहेतुरूपा-
येन प्रतिज्ञात्वावच्छिन्नभेदस्तथा प्रतिज्ञायामपि न
त्ववह्निमानिति पदत्वावच्छिन्नभेद इति । तस्मा
यवृत्त्यधिकरणताकभेदाभ्युपगमेनैव लक्षणद्वयं न तु
भेदानङ्गीकारपक्षे द्वितीयम् । प्रथमस्येतरभेदासाध-
न्यतमत्वघटकप्रतिज्ञात्वादेरेव व्याप्यत्वेनाधिकस्य
तद्विवारकत्वेन वैयर्थ्यात् । न च प्रतिज्ञात्वेनानुप-
वैयर्थ्यमिति वाच्यम् । प्रतिज्ञाभिन्नभेदस्यैव गम-
म्भवात् । धर्मिभेदाद्वैयर्थ्येऽप्यधिकं निग्रहस्था-
तेन साधनासम्भवाद् द्वितीयमित्याहुः ।
तु न्यायान्तर्गतत्वे सति यद्धर्मावच्छिन्नमुख्यवि-
निरूपितयादृशप्रकारताशालिबोधाः प्रतिज्ञाहेतू-
दिजन्यास्तादृशप्रकारत्वाव्यापकविषयताशून्य-
न्यतमबोधजनकतावच्छेदकतापर्याप्त्यधिकरणा-
वत्वम् । शून्यान्तेनावयवद्वयनिरासः । पर्याप्त्या
निरासः । उदासीनप्रतिज्ञादिसमानार्थकवारणाय
न्तर्गतत्वमित्याहुः । तन्न । तस्मादिति विहाय
नयमित्यादिनिगमनेऽतिव्याप्तेरिति दिक् ।

यावयवत्वं प्रतिज्ञात्वम् । उदाहरणवारणाय सत्येन
स्येतरान्वितस्वार्थबोधकत्वाभावात् । द्वितीयस्वीयपद
ुपादाने गुणकर्मान्यत्वे सति सत्त्वादित्यादिहेतावति
याप्तेः । तस्य स्वीयान्यभिन्नप्रतिज्ञास्थसाध्यपदेन सह
वयबोधकत्वात् । न च स्वीयाद्यपदविशेष्यकान्वयबोध
जनकत्वमेवास्तु लाघवादिति वाच्यम् । धूमादालोकवा
र्वतो वह्निमान् इत्यादिप्रतिज्ञायामव्याप्तेः । न च तथा
पे गुणकर्मान्यत्वे सति सत्त्वादित्यादावतिव्याप्तिः, तत्र
सप्तम्यर्थमुख्यविशेष्यकगुणकर्मान्यत्वप्रकारकखण्डवाक्या
बोधजनकत्वादिति वाच्यम् । तादृशबोधजनकतावच्छे
कतापर्याप्त्यधिकरणत्वावयवत्वस्योक्तत्वात् । निगम
र्थपदानुषङ्गपक्षेऽयं । तस्माद्वह्निमानिति निगमनेऽर्थपदवि
ष्यकान्वयबोधजनके च नातिव्याप्तिः । स्वीयपदेन पर
ीयभिन्नत्वस्योक्तत्वादर्थपदस्याभयघटकत्वेन परकीय
ात् । हेतुत्वं तु स्वार्थविशिष्टवैशिष्ट्यबोधजनकन्यायाव
वत्वम् । स्वार्थविशिष्टबोधजनकत्वोक्ते निगमनेऽतिव्या
ः । अर्थपदाननुषङ्गपक्षे तस्यापि स्वार्थविशिष्टबोधजन
त्वात् । अतः स्वार्थविशिष्टवैशिष्ट्येत्याद्युक्तम् । तत्रानु
ङ्गपक्षे तु स्वार्थविशिष्टबोधजनकन्यायावयवत्वं तत्त्वम्
तरान्वितबोधकन्यायावयवत्वमुदाहरणम् । निगमनेऽर्थ
दाननुषङ्गपक्षेणेदं, तेन तत्र नातिव्याप्तिः । स्वार्थमुख्य
िशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्वमुपनयत्वम्
ामिन्नावयवार्थमुख्यविशेष्यतानिरूपितस्वार्थप्रकारताक
हेत्ववयवत्वं निगमनत्वमिति वदन्ति ।

नुमितेस्तत्कारणज्ञानस्य वा विरोधितावच्छेदकं तद्-
शिष्टविषयत्वम् ।

यद्यपि साध्याभाववत्पक्षविषयकज्ञानत्वेनानुमि-
बन्धकत्वात्तादृशपक्षवत्त्वस्य हेतौ सत्त्वेऽपि सा-
वद्वृत्तिहेतुज्ञानत्वेनानुमितिकारणविरोधित्वात्ताद्द-
ग्रस्य हेतावभावात् कथं तस्य हेतुनिष्ठदोषत्वं, तथा
पत्वं येन केन चित् संबन्धेन बोध्यम् । एवं च व-
ह्व्याप्यपाषाणवान्पर्वत इति परामर्शकालीनव-
प्यधूमादेः सत्प्रतिपक्षितत्वाभावेऽपि न क्षतिः ।
शिष्टार्थस्याप्रसिद्धेः । तत्र बाधसत्प्रतिपक्षयोरनुमि-
बन्धकत्वम् । अनैकान्तिकादेस्तत्कारणज्ञानप्रतिब-
ं द्रष्टव्यम् ।

के चित्तु पर्वतो वह्निव्याप्यधूमवान् पर्वतो वह्नि-
ने अनुमितिप्रतिबन्धकत्वं सर्वेषामस्ति । अनुमि-
यानुमितिविशेषे तात्पर्यं तथा च यज्ज्ञानमनुमिति-
प्रतिबन्धकं स हेत्वाभास इत्याहुः ।

अत्रानैकान्तिकस्त्रिविधः । साधारणासाधारणानु-
रिभेदात् । तल्लक्षणं तु साधारणाद्यन्यतमत्वमिति
[ ।

तत्र साधारणः साध्यवदन्यवृत्तिः । तज्ज्ञानं सा-
ध्यावृत्तित्वरूपव्याप्तिज्ञाने ग्राह्याभावावगाहितया
प्रतिबन्धकं व्याप्त्यन्तरज्ञाने तु मणिमन्त्रादिवत्
धकम् ।

कताज्ञानकारणताबादिमतेऽसाधारणस्य हेत्वाभा
मृग्यम् ।

केचित्तु निश्चितसाध्यवद्वृत्तिरसाधारणः । 
साध्यनिश्चयदशायां नासाधारण्यमित्याहुः । तन्न ।
श्चितसाध्यवद्वृत्तित्वग्रहेऽपि व्याप्तिघटकपदार्थोपस्थि
व्याप्तिविशिष्टपक्षधर्मताज्ञानादनुमित्युत्पत्तौ बाधका
वेनानुमितेस्तत्कारणज्ञानस्य वा प्रतिबन्धकत्वाभ
हेत्वाभासत्वायोगात् ।

अनुपसंहार्यत्यन्ताभावाप्रतियोगिसाधकः ।
एव तज्ज्ञानं व्यतिरेकव्याप्तिज्ञाने प्रतिबन्धकम् ।

साध्याभावव्याप्यो हेतुर्विरुद्धः । तज्ज्ञानं सा
नुमितौ प्रतिबन्धकम् । साध्याभावव्याप्यज्ञानस्य सा
ज्ञाने प्रतिबन्धकत्वात् ।

परे तु साध्यव्यापकीभूताभावप्रतियोगिहेतुर्विरु
अयं च साध्याभावग्राहकसामग्रीत्वेन प्रतिबन्धक
सत्प्रतिपक्षे हेत्वन्तरं साध्याभावसाधकम् । अत्र तु
रेवोभयसाधक इत्यशक्तिविशेषोऽबाधकत्वं चास्येति स
तिपक्षाद्भेदः ।

अन्ये तु उक्तविरुद्धलक्षणमसाधारणस्य तल्ल
विरुद्धस्येति वदन्ति ।

सत्प्रतिपक्षश्च साध्याभावव्याप्यवान् पक्षः ।
ज्ज्ञानमनुमितिविरोधि ।

असिद्धस्त्रिविधः । आश्रयासिद्धस्वरूपासिद्धव्या
त्वसिद्धभेदात् । तत्र पक्षे पक्षतावच्छेदकाभाव आश्र

ाने काञ्चनमयः पर्वतो वह्निमानिति ज्ञानस्य वह्निव्या-
द्धूमवान् काञ्चनमयःपर्वत इति ज्ञानस्य चानुपपत्तेः।

पक्षे हेतुत्वेनाभिमताभावः स्वरूपासिद्धः। यथा
दो धूमवान् वह्नेरित्यादौ। एतद् ज्ञानं परामर्शे प्रतिब-
न्धकम्।

हेतुत्वेनाभिमते व्याप्त्यभावो व्याप्यत्वासिद्धः
मवान् वह्नेरित्यादौ। साध्ये साध्यतावच्छेदकाभावरू
साध्याप्रसिद्धः। साधने साधनतावच्छेदकाभावरूप
ाधनाप्रसिद्धिरपि व्याप्यत्वासिद्धिः। एतज्ज्ञानस्यापि
याप्तिज्ञाने प्रतिबन्धकत्वात्।

पक्षे साध्याभावो बाधः। तज्ज्ञानमनुमितौ विरोधि

ननु साध्यवदवृत्तित्वादिरूपासाधारणज्ञानवत् त
याप्त्यज्ञानस्य व्याप्तिज्ञाने विरोधित्वात्तस्य हेत्वाभासत्
। कथं हेत्वाभासानां पञ्चत्वम्। न च तत्तद्धेत्वाभास
याप्यानां तत्तद्धेत्वाभासेऽन्तर्भावात्ताधिक्यमिति वाच्य
। सत्प्रतिपक्षस्यापि बाधेऽन्तर्भावेण पञ्चविधत्वानुपप
ारिति चेत्? न। बाधभिन्नहेत्वाभासव्याप्यस्योक्तलक्ष
ाक्रान्तस्य बाधभिन्नहेत्वाभासेऽन्तर्भावात्। उक्तलक्षणा
क्रान्तस्येति विशेषणात् सत्प्रतिपक्षव्याप्यस्योक्तलक्षण
ाक्रान्तस्य न हेत्वाभासत्वम्। बाधभिन्नत्वविशेषणाच्च
यव्याप्यसत्प्रतिपक्षस्य न बाधेऽन्तर्भावः।

न चोक्तलक्षणाक्रान्तस्य तत्तद्धेत्वाभासव्याप्यत
तद्धेत्वाभासेऽन्तर्भावात् सत्प्रतिपक्षस्य बाधेऽन्तर्भावे
हेत्वाभासचतुष्कमेवास्त्विति वाच्यम्। स्वतन्त्रस्य सा

उत्पत्तिकालावच्छिन्नघटो गन्धवान् पृथिवीत्वादि
पक्षतावच्छेदकावच्छेदेनानुमितौ बाधस्यैव विरोधित
यत्र सुखव्याप्यात्मत्ववानीश्वर इति परामर्शो
बाधोऽनुमितिस्तत्र बाधस्यैव हेत्वाभास बाध्य।

नन्वीश्वरसद्भावे किं मानम्। न च क्षितिः
सकर्तृका कार्यत्वात् घटवदित्यनुमानात्तत्सिद्धिरिति वा
कुलालादिना सिद्धसाधनात्। न च पक्षतावच्छेद
च्छेदेन साध्यसिद्धेरुद्देश्यकत्वेन नांशतः सिद्धसाधन
वाच्यम्। तत्तत्कार्यविशेषं प्रति तत्तत्कर्तुर्विशिष्यहे
स्या वश्यकत्वेन कार्यत्वावच्छिन्नं प्रति कर्तृत्वेन
णत्वे मानाभावादितिचेन्। न। समवायेन पट
वच्छिन्नं प्रति विशिष्यतया कृतेर्हेतुत्वेन यत्र
पटनाशो वायुसंयोगप्रयोज्यस्तदनन्तरं खण्डपटोत्प
स्तत्पटजनककृतेराश्रयस्येश्वरस्य सिद्धेरप्रत्यूहत्वात्
पटः कृतिजन्यः पटत्वात्कुविन्दजन्यपटवदित्याहुः।

परे तु कुविन्दादिकृतेः पटादिजनकत्वं न सा
किं तु तन्त्वादिविलक्षणसंयोगसम्पादनेन। खण्डपट
वपि तत्सत्त्वेन कुविन्दादिजन्यत्वाश्शोकेरीत्येश्वरसि
किं त्वागमादेवेत्याहुः।

इत्यनुमानपरिच्छेदः समाप्तः॥



## अथोपमानं निरूप्यते ।

उपमितिकरणमुपमानम् । उपमितित्वं चोपमिनो
मीत्यनुभवसिद्धो जातिविशेषः । तत्करणं च सादृश्य
दिविशिष्टे विशिष्याग्रहीतशक्तिकपदवाच्यताज्ञानम्
तत्स्मृतिर्व्यापारः । गवयत्वादिविशिष्टे गवादिसादृश्य
दिज्ञानं सहकारि गवयत्वादिविशिष्टविशेष्यकगवया
दिवाच्यत्वप्रकारकोपमितौ समवायेन गवयत्वादिवि
शिष्टे गोसादृश्यादिज्ञानं गोसादृश्यादिविशिष्टे गवय
दिपदवाच्यताज्ञानं च हेतुः । अत्राप्यवयवहितोत्तरत
ार्यतावच्छेदके निवेश्यं तेनान्यसादृश्यज्ञानाद्गवये ग
ापदवाच्यत्वोपमितौ न व्यभिचारः । न तु गोसदृशं
वयपदवाच्य इत्याकारा नापि गवयपदप्रवृत्तिनिमित्त
यत्ववानित्याकारोपमितिः । समानप्रकारकशक्तिग्रह
दार्थोपस्थितौ शाब्दबोधे च हेतुत्वेन तादृशशक्तिग्रहस्य
वय इत्याकारके शाब्दबोधेऽनुपयोगितापत्तेः । ननु गोस
दृश्यज्ञानस्य द्रव्यत्वविशिष्टेऽपि सत्त्वात् द्रव्यत्वविशि
वयपदशक्यत्वप्रकारकोपमितिरिति चेन्न । पदादौ गवयपद
योगनिर्णयेन द्रव्यत्वस्य गवयपदशक्यतावच्छेदकत्वग्र
धादेवाग्रहात् । इयं च नानुमितिः गवयत्वविशिष्टे गव
पदवाच्यत्वव्याप्यवत्ताज्ञानस्याभावेऽपि जायमानत्वात्
शाब्दबोधोऽपि । गवयो गवयपदवाच्य इत्याकारकशब्द
ाभावात् । सर्वाप्युपमितिः शक्तिग्राहिकेति प्राञ्चः ।

परे तु मुद्गपर्णीसदृश्यौषधी विषहन्त्रीत्यतिदेशवाक्य
न्यज्ञानजन्याया उपमितेः शक्तिपरिच्छेदकत्वाभावः
न्तु विषनाशजनकत्वपरिच्छेदकत्वं तथा च शक्तिविष

## अथ शाब्दो निरूप्यते ।

शाब्दप्रमितिकरणं शब्दः । शाब्दत्वं च शा
मीति प्रतीतिसाक्षिको जातिविशेषः । इदं च प्राची
तेन । वस्तुतोऽतीतानागतशब्दज्ञानाच्छाब्दबोधस्य उ
मानत्वाच्छब्दज्ञानं करणम् । वृत्त्या तज्जन्यपदार्थ
स्थितिर्व्यापारः । योग्यतादिज्ञानं सहकारि ।

अपरे तु प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः श
प्रमाणम् । अर्थज्ञानजन्यः शब्दः प्रमाणमित्युक्ते व
सिञ्चेदिति वाक्ये वह्निकरणकः सेक इति भ्रमजन्ये
व्याप्तिरिति तत्त्वपदोपादानम् । तस्यार्थप्रमाजन्यत्वा
वात् । ब्राह्मणप्राणत्राणकारकमनृतं वक्तव्यमिति वेद
क्यार्थतत्त्वज्ञानाधीनानृतवचनेऽतिव्याप्तिवारणाय प्र
गहेतुभूतेति । प्रयोगहेतुभूतेत्यर्थविशेषणं प्रयोगजन्य
नविषय इत्यर्थः । ननु वाक्यार्थज्ञानस्य विवक्षोपक्षीण
न वाक्याहेतुत्वेऽपि संवादिवाक्ये ईश्वरज्ञानमादाय त
णासम्भवे विसंवादिवाक्ये स्वप्रतिपाद्यार्थज्ञानजन्य
मेव नास्तीति तत्त्वपदोपादानवैयर्थ्यमिति चेन्न । बा
वाक्यार्थविषयकस्य बाधितवाक्येष्टसाधनताज्ञानस्य
धितवाक्ये हेतुत्वात्तत्राऽतिव्याप्तिवारणाय तत्त्वपदोपा
नादित्याहुः । तन्न । वह्निना पयसा सिञ्चतीति ह
हालस्यवचनशाब्दज्ञानमादाय वह्निना सिञ्चतीत्यत्राऽतिव्या
प्तेः । न च यद्विशेष्यकयत्प्रकारकशाब्दबोधत्वं स्वजन्य
तावच्छेदकं तत्प्रकारकतद्विशेष्यकप्रमाजन्यत्वस्योक्तत्वा

सम्भवात् । समवायिकारणत्वसम्बन्धावच्छिन्नप्रकारताकशाब्दत्वस्य
यतासम्बन्धादेरेव कार्यतावच्छेदकत्वादिति दिक् ।

यद्यपि संयोगादिशाब्दत्वं न संयोगादिवृत्तित्वेन
तपदज्ञानस्य कार्यतावच्छेदकं, संसर्गविधया संयोगादेः
ब्दबोधे व्यभिचारात् । तथापि सांसर्गिकविषयतान्य-
षयताकशाब्दत्वं कार्यतावच्छेदकं बोध्यम् ।

केचित्तु जन्यपदधीजन्यत्वव्यभिचार्यनुभवत्वव्याप्य-
जातिशून्यत्वे सति पदविषयकत्वाव्यभिचारिजाति-
यधीप्रमा शाब्दप्रमा तत्करणत्वं शब्दप्रमालक्षणम् ।
मशून्यान्तं प्रत्यक्षानुमितिस्मृतीनां वारणाय, जाति-
पत्वमनुभवत्वव्यापकजातिशून्यत्वं जन्यपदधीशून्य-
पभिचारिजातिशून्यत्वं चासम्भवि । तत्रानुभवत्वा-
ं सत्त्वात् । पदधीजन्यत्वव्यभिचार्यनुभवत्वव्याप-
ातिशून्यत्वं चानुमितावपि । अनुमितित्वस्येश्वरपद-
न्य वाऽव्यभिचारात् । अतः समुदितमुपात्तम् । उप-
ावतिव्याप्तिवारणाय द्वितीयशून्यान्तम् । जात्यादाव-
याप्तिवारणाय धीपदम् । शाब्दभ्रमेऽतिव्याप्तिवार-
प्रमापदं भ्रमभिन्नत्वपरमित्याहुः । तन्न । मुद्गपर्णस-
ाषधी विषहन्त्रीत्यतिदेशवाक्यार्थज्ञानजन्यायामिय-
धी विषहन्त्रीत्याद्युपमितावुपमितित्वस्य सत्त्वेन
जन्यपदधीजन्यत्वव्यभिचार्यनुभवत्वाव्यापकजाति-
सत्यन्तेनैवोपमितिवारणसम्भवे विशेष्ये शून्यान्त-
र्थ्यात् । किं चोपमितित्वस्योक्तोपमितौ सत्त्वेन पद-
यत्वस्य व्यभिचारितया पदविषयत्वाव्यभिचारिजा-
सिद्धा संभवः । न चैकाक्षरनिघण्ट्वादिभिः सर्ववर्णा-

णत्वसत्त्वेन तस्य पदविषयत्वव्यभिचारित्वात् । न
पदपदं शब्दपरमिति वाच्यम् । तथापि वैयर्थ्यानुद्धा
किं च पूर्वदले पदस्थाने शब्दप्रवेशेनैवोपपत्तौ पद
धावनानुपपत्तिः । अत एवैषापत्तिरपि निरस्तेति

ननु तथापि शब्दो न मानं यस्मिन् सत्यवि
प्रमा तदेव मानम् । न च शब्दे सति प्रमा । आकाङ्क्ष
ज्ञानाभावेन प्रमाया अभावात् । अत्र प्रमितिकरण
भावेन प्रमितिकरणत्वाभावस्य साध्यत्वान्न साध्या
इति चेन्न । प्रमास्वरूपयोग्यकारणत्वाभावस्य हे
स्वरूपासिद्धेः । आकाङ्क्षादिज्ञानासहकृतस्यापि शब्द
लोकासहकृतचक्षुरादिवत् प्रमास्वरूपयोग्यत्वात् ।
प्रमाफलोपहितकारणत्वाभावेन हेतुना प्रमास्वरूपयो
करणत्वाभावः साध्यः आलोकादिरहितचक्षुरादौ व्य
चारात् । न च प्रमाफलोपहितकरणत्वाभाव एव
हेतुना साध्य इति वाच्यम् । आकाङ्क्षादिज्ञानासहकृ
शब्दस्य पक्षत्वे सिद्धसाधनात् । आलोकासहकृतचक्षु
देरिव तादृशशब्दस्यापि नैयायिकैः प्रमाफलोपहितक
त्वानङ्गीकारात् । आकाङ्क्षादिसहकृतस्य पक्षत्वे स्वरू
सिद्धेः । तादृशस्य प्रमाफलोपहितकारणत्वाङ्गीकारा
दिक् ।

वैशेषिकास्तु चैत्रवाक्यादमुमर्थं प्रत्येमीति प्रत्य
दस्तु विशिष्टार्थप्रत्यायकत्वं शब्दस्य, न तु स्वातन्त्र्ये
स्वतन्त्रप्रमाणकल्पने गौरवात् । किन्तु अनुमानविधयै
न च शब्दस्याकाशवृत्तित्वेन भूतलादिवृत्तिपदार्थव्या
त्वात् कथं तेनानुमानमिति वाच्यम् । भूतलं तात्पर्यवि

दियामीत्यनुभवसिद्धज्ञानस्यैतादृशानुमानजन्यत्वे घटः त्वमित्यादावपि कर्मत्वं घटीयं घटपदेन योग्यतावत्- रितत्वादित्याद्यनुमानस्य तत्रापि सम्भवेन तत्रापि शाब्दानापत्तिः । इष्टापत्तावनुभवविरोध इति वा- म् । घटादिप्रकारककर्मत्वादिविशेष्यकशाब्दबोधात्म- नुमितिविशेषे घटादिपदोत्तरकर्मत्वादितत्तद्विभक्ति- जन्यकर्मत्वाद्युपस्थितेर्हेतुत्वात् । अतो घटमानयेत्या- घटादिविशेष्यकः कर्मत्वादिप्रकारको न बोधः । विभ- पस्याप्यकर्मत्वादिविशेष्यकतत्तत्प्रकारकशाब्दबोधे त- शेषाणां हेतुत्वम् । परं त्वतिरिक्तप्रमाणकल्पने गौरवा- विधयैव तत्र शब्दस्य हेतुत्वाच्छाब्दत्वमनुमितित्व- प्यम् । न च तत्रानुमितित्वस्वीकारे व्याप्तिज्ञानकार- स्य च स्वीकारे गौरवाद्विपरीतमेव गौरवमिति वा- च्यम् । वह्न्यादिलौकिकप्रत्यक्षसामग्र्याः वह्न्यनुमितौ शाब्दबोधे च प्रतिबन्धकत्वकल्पने गौरवापत्तिभिया दत्वस्यानुमितित्वव्याप्यत्वस्वीकारेण वह्न्याद्यनुमि- त्वावच्छिन्न एव वह्निलौकिकप्रत्यक्षसामग्र्याः प्रतिब- न्धकत्वकल्पनात् । किं च भवन्मते वह्न्यनुमितिशाब्द- सामग्र्योः परस्परं प्रतिबध्यप्रतिबन्धकभावकल्पने गौ- न मन्मते शाब्दबोधसामग्र्याऽनुमितेरिति वदन्ति । पर्वतादिविशेष्यकवह्न्यादिप्रकारकनिश्चयस्य वह्न्या- कारकपर्वतादिविशेष्यकाऽनुमितौ विरोधित्वम् । मते तादृशनिश्चयेऽपि शाब्दबोधात्मकतादृशाऽनुमिते- सामान्यत्वेन शाब्दबोधभिन्नतादृशाऽनुमितौ तस्य प्रतिब- न्धकत्वकल्पने गौरवापत्तेः । शाब्दबोधेऽप्यनुमितित्वस्वीका-

षशाब्दबोधे व्याप्तिज्ञानादेः कारणत्वकल्पने गौरवाप
अपि च घटा पृथगितिशब्दात् घटावधिकपृथक्त्वप्रक
शुद्धाश्रयबोधोऽनुभवसिद्धः । न च त्वन्मते नुमान
दृशबोधः सम्भवति । आश्रयं पक्षीकृत्य पृथक्त्वसा
धाश्रयत्वप्रकारकोऽपि स्यान्न तु केवलपृथक्त्वप्रक
एव । अपि च लौकिकसन्निकर्षाजन्यदोषविशेषाजन
ष्टत्वाज्ञाने तदभावनिश्चयाभाव एव हेतुर्लाघवाद
योग्यताज्ञानमपि । तथा च योग्यताज्ञानं विनाऽपि शा
बोधो न तु भवदभिमतानुमितिः । योग्यताविनाकृत
ज्ञानं तु व्यभिचारज्ञानदशायामपि शाब्दबोधस्यानुभ
कत्वात् । किं च घटो नास्तीत्यादौ अनुयोगितासम्ब
घटानुमितिस्त्वया वाच्या सा च न सम्भवति वृत्त्यनि
मकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वेन सम्बन्धे व
प्त्यभावात् । सत्त्वेऽपि वा तादृशव्याप्तिज्ञानस्य कु
प्यनुमितिहेतुत्वाकल्पनात् । पर्वते वह्निमनुमिनोमी
वदभावे घटमनुमिनोमीति प्रतीतेरभावात् । किं च श
ब्दबोधस्यानुमितित्वे वह्निव्याप्याभाववान् पर्वतो वा
मानिति शाब्दबोधो न स्यात् । तत्र वह्निव्याप्यवत्
धियो हेतुत्वात्तस्याश्च वह्निव्याप्याभावधीविरोधित्वा
त्यादिकं प्रपूज्यमिति दिक् ।

ननु यदि स्वातन्त्र्येण शब्दो मानं तदा यजेतेत्यादि
पामराणामर्थप्रत्ययः स्यादिति चेन्न । शब्दज्ञानस्य शा
बोधे करणत्वेन वृत्तिज्ञानजन्यपदार्थोपस्थितेर्व्यापारत्वं
पामराणां यज्यादिपदे शक्तिलक्षणान्यतररूपवृत्तिज्ञान
भावेन तेषां व्यापाराभावात् । शक्तिलक्षणयोः स्वर

[illegible]

घटादिप्रकारककर्मत्वादिविशेष्यकबोधः स्यात् । शब्द-
स्य वृत्तिज्ञानजन्यपदार्थोपस्थितेश्च सत्वादिति चेन्न ।
ाङ्क्षायाः शाब्दबोधे कारणत्वाङ्गीकारात् । सा च न
र्थविषयान्वयानुभवाभावः । घटः कर्मत्वमित्यादा-
तत्सत्वात् । नापि तदुच्चारणजन्यशाब्दबोधाभावः।
ोति राज्ञः पुत्रः पुरुषोऽपसार्यतामित्यादौ राजपदा-
पुत्रान्वयकाले पुरुषान्वयापत्तेः ।

किं तु यत्पदं येन पदेन सह यादृशान्वयानुभवजनक
पदस्य तेन पदेन समभिव्याहारस्तादृशान्वयबोधे
ाङ्क्षा घटादिपदं कर्मत्वादिवाचकत्वोत्तरविभक्तिपदे-
घटादिप्रकारककर्मत्वादिविशेष्यकान्वयबोधकं ततो
देपदस्य स्वोत्तरतादृशविभक्तिसमभिव्याहारस्तादृश-
आकाङ्क्षा । अत एव घटः कर्मत्वमित्यादितस्तादृश-
क्तिसमभिव्याहारस्तादृशबोधे आकाङ्क्षा । अत एव घटः
ामित्यादितस्तादृशबोधो न । घटप्रकारककर्मत्वविशे-
ाब्दबोधे घटपदोत्तरकर्मत्ववृत्तिविभक्तिरूपायाः
ावृत्तत्वेन तादृशविभक्तिज्ञानरूपाया वा काङ्क्षाया
वात् । इयं च स्वरूपसती हेतुर्न तु तज्ज्ञानम् । घटः
ामित्यत्र कर्मत्वपदे द्वितीयात्वभ्रमेण तादृशबोधा-
। एवमानयनादिप्रकारकवृत्त्यादिविशेष्यकशाब्दबोधे
नादिबोधकधातूत्तरः कृत्यादिबोधक आख्यात आ-
ा । अत एवानयनं कृतिरित्यादितो न तादृशबोधः ।
न च द्वितीयायामगृहीतशक्तिकस्य घटमित्यानुपू-
शृण्वतो घटः कर्मत्वमित्यादितः पदार्थोपस्थितौ
ारककर्मत्वविशेष्यकशाब्दबोधापत्तिस्तादृशसमभि-

रूपासत्तिविरहेणैव तादृशधाभावात् । अत एवासत्ति-रपि शाब्दबोधे कारणम् । न चैवमासत्तिविरहणैव घटः कर्मत्वमित्यादौ तादृशबोधाभावे उक्ताकाङ्क्षायाः शाब्द-बोधे हेतुत्वे मानाभाव इति वाच्यम् । घटमित्यत्र कालि-कसम्बन्धेन घटप्रकारककर्मत्वविशेष्यकबोधवारणाय घट-प्रकारकनिरूपितत्वसंसर्गककर्मत्वविशेष्यकबोधे उक्ताका-ङ्क्षाया हेतुत्वं वाच्यम् । तथा च घटः कर्मत्वमित्यत्रस्ता-दृशाकाङ्क्षाया अभावेन निरूपितत्वसंसर्गकघटप्रकारक-कर्मत्वविशेष्यकबोधाभावेऽपि कालिकसम्बन्धेन घटप्रकार-ककर्मत्वविशेष्यकबोधापत्तिवारणाय सामान्यतो घटप्र-कारककर्मत्वविशेष्यकबोधे घटपदोत्तरविभक्तिजन्यकर्म-त्वोपस्थितिरूपासत्तेर्हेतुत्वान्न घटः कर्मत्वमित्यतस्तादृशो बोधः । एवं विभक्त्यर्थकर्मत्वादिप्रकारकधात्वर्थविशेष्य-कबोधे कर्मत्वादिवृत्तविभक्त्युत्तरधातुरूपाकाङ्क्षायास्ता-दृशधातुजन्योपस्थितिरूपाया आसत्तेश्च हेतुत्वम् ।

न चैवं सति घटं तण्डुलं जानाति पचतीत्यत्र तण्डु-लकर्मत्वपाकादेः परस्परमन्वयबोधो न स्यात् । कर्मत्ववृत्त-विभक्त्यव्यवहितोत्तररूपाकाङ्क्षादेरभावादितिवाच्यम् । तत्र योजनयाऽव्यवधानं सम्पाद्य वाक्यान्तरादेव बोध इति केचित् ।

अन्ये तु विशेष्यतया कर्मत्वादिप्रकारकबोधे धातु-जन्योपस्थितेर्धातोश्च हेतुत्वं न त्वव्यवधानस्याकाङ्क्षास-त्त्योः प्रवेश इत्याहुः ।

परे तु अव्यवधानं च तदर्थे स्वार्थान्वयबोधं जनय-त्विति तात्पर्यविषयत्वम् । तच्च तत्राप्यस्तीत्याहुः ।

नन्वयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्ररा-

जपदस्य पुरुषपदेन सहान्वयापत्तिरिति चेन्न। राजपदार्थस्य पुरुषपदार्थान्वये तात्पर्याभावेन तात्पर्यज्ञानाभावात् । सति तात्पर्यज्ञाने त्विष्टत्वाच्च। इतोऽपि तात्पर्यज्ञानस्यापि शाब्दबोधे हेतुत्वम् । अत एव तात्पर्याभावेऽपि तज्ज्ञानाद्बोधः । न चैवमेकशाब्दबोधोत्तरं पुनस्तथैवाव्यवधानेन शाब्दबोधापत्तिरिति वाच्यम् । तत्तन्मुख्यविशेष्यकतत्प्रकारकशाब्दबोधे तादृशशाब्दबोधेच्छाविरहविशिष्टतादृशशाब्दबोधस्य प्रतिबन्धकत्वात् । मुख्यविशेष्यकेति विशेषणाद्रक्तो दण्ड इति शाब्दबोधोत्तरं रक्तदण्डवान् पुरुष इति शाब्दबोधेऽपि नक्षतिरिति दिक् ।

ननु यस्य घटः कर्मत्वमित्यादिवाक्ये व्युत्पत्तिः तस्य ततोऽन्वयबोधो न स्यादिति चेन्न । तादृशशाब्दबोधे क्लृप्तकारणभावेनेष्टत्वात् ।

केचित्तु घटप्रकारककर्मत्वविशेष्यकबोधे घटपदोत्तरकर्मत्ववृत्तविभक्तिस्तज्जन्यकर्मत्वोपस्थितिश्च कारणमिति ज्ञानवतस्तादृशबोधे घटपदोत्तरकर्मत्ववृत्तविभक्तेस्तज्जन्यकर्मत्वोपस्थितेश्च कारणत्वाद् घटः कर्मत्वमित्यादौ व्युत्पन्नस्य घटः कर्मत्वमित्यादितो घटप्रकारककर्मत्वविशेष्यकबोधेऽपि न क्षतिरिति वदन्ति ।

वह्निना सिञ्चेदित्यादिनान्वयबोधाभावाद्योग्यताज्ञानं शाब्दबोधे कारणम् । सा च येन सम्बन्धेन यत्र यस्यान्वयस्तत्र तस्य संसर्गः । तेन सम्बन्धेन तद्वत्त्वं वा । तस्याश्च संशयनिश्चयसाधारणज्ञानत्वेन ज्ञानं हेतुः । अत एव तद्भ्रमेणाप्यन्वयबोधः ।

न च तत्तद्विशेष्यकतत्तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावनिश्चयस्य तत्तल्लौकिकप्रत्यक्षान्यपित्तादिदोषाजन्यतत्तद्विशेष्यकत्वेन तेन सम्बन्धेन तत्तत्प्रकारकज्ञाने

प्रतिबन्धकत्वकल्पनात्, तदभावादेवायोग्यवाक्याच्छा-ब्दबोधानुत्पत्तौ किं योग्यताज्ञानकारणत्वेनेति वाच्यम् । यत्र यस्य शाब्दबोध एव जातः, अयोग्यताज्ञाननिश्चये सति न जातस्तत्र तस्य शाब्दबोधे योग्यताज्ञानस्यैव लाघवेन हेतुत्वात् । तदभावनिश्चयाभावकारणत्वेन गौरवापत्तेः । यत्र च यस्याभावनिश्चयो न जातस्तत्र तच्छाब्दबोधे न योग्यताज्ञानमपि हेतुः, गौरवात् । घटमानयेत्यादावयोग्यतानिश्चयाभावस्यैव हेतुत्वं न तु योग्यताज्ञानस्य गौरवात् ।

न चाभिधेयत्वप्रकारकशाब्दबोधे तदभावनिश्चयाप्रसिद्धा कथमयोग्यत्वनिश्चयाभावस्य हेतुतेति वाच्यम् । अभिधेयत्वप्रतियोगिकत्वेन ज्ञानाभावनिश्चयाभावस्यैव हेतुत्वात् । एकपदार्थेऽपरपदार्थनिष्ठात्यन्ताभावाप्रतियोगित्व—अपरपदार्थनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वरूपयोग्यताज्ञानं न हेतुः, गौरवात् । अत एव सजातीयान्वयदर्शनमन्वयप्रयोजकरूपवत्वं वा न योग्यता । येन केनापि सजातीयेऽन्वयदर्शनस्यायोग्येऽपि सत्त्वात् । पदार्थतावच्छेदकरूपेण सजातीयेऽन्वयदर्शनस्य तत्तद्व्यक्तित्वेन तत्तद्व्यक्तिशाब्दबोधे सत्त्वाच्च । अन्वयप्रयोजकरूपवत्त्वस्य द्रवद्रव्यत्वस्य सेकानन्वयिनोऽग्नेः सत्त्वेन तदभिप्रायके जलेन सिञ्चतीत्ययोग्यवाक्येऽपि सत्त्वाच्चेत्याहुः ।

अन्ये तु तत्तत्प्रकारकशाब्दप्रमात्वावच्छिन्ने तत्तत्प्रकारकप्रमाया एवं तत्प्रकारकशाब्दप्रमात्वावच्छिन्ने तत्तत्प्रकारकाप्रमाया योग्यताऽप्रमारूपाया निश्चयसंशयसाधारण्या हेतुत्वं वाच्यम् । अन्यथा योग्यतानिश्चयाभावदशायां बाधितवाक्याच्छाब्दप्रमापत्तेश्च । एवं च सिद्धे विशिष्य हेतुत्वे यद्विशेषयोरिति न्यायात्तत्तत्प्रकारकशा-

च्छेदत्वावच्छिन्नं प्रति तत्तत्प्रकारकज्ञानस्य हेतुत्वम् । न चैवं योग्यतासंशयाच्छब्दो नित्योऽनित्यो वेति वाक्यात् संशयात्मकशाब्दबोधापत्तिरिति वाच्यम् । अनायत्या तदभावशाब्दसामाग्र्यास्तद्वत्ताद्दशशाब्दबोधे विरोधित्वकल्पएवं वैपरीत्येऽपि। सामग्री तु पदार्थोपस्थित्यादिकारणरूपानात्। विशिष्य ग्राह्या न तु फलोपहिता । यद्वा विप्रतिपत्तिवाक्यादाहत्य संशयस्वीकारात् संशयात्मकशाब्दबोधोऽपि इष्ट एवेति वदन्ति । तन्न । तत्तत्प्रकारकशाब्दप्रमात्वावच्छिन्ने सामान्यतस्तत्तत्प्रमात्वावच्छिन्ने क्लृप्तकारणतायास्तत्तद्विशेष्यसम्बन्धविशेषणाद्युपस्थितेस्तत्त्वेन हेतुत्वमस्तु लाघवान्न तु योग्यताज्ञानस्य गौरवादित्याहुः ।

केचित्तु शाब्दबोधे न योग्यताज्ञानं हेतुः नाप्ययोग्यतानिश्चयो विरोधी । अत एव प्रहसनस्थले कलहादौ चायोग्यतानिश्चयसत्त्वेऽपि शाब्दबोधः । तेन च दुःखाद्युत्पत्तिः । न च तत्र शब्दात्पदार्थस्मृतिमात्रं स्मृत्या च मानसज्ञानादेव दुःखाद्युत्पत्तिरिति वाच्यम् । परकीयशब्दं विनापि स्वीयताद्दशमानसज्ञानादपि दुःखाद्युत्पत्त्यापत्तेरित्याहुः । तन्न । कलहादिवद्धास्यस्थलेऽपि ताद्दशशब्दस्य श्रवणेन दुःखोत्पत्त्यापत्तेः । अत एव दैववशसंपन्नताद्दशशब्दश्रवणान्न दुःखम् । अत एव ताद्दशार्थे तात्पर्यज्ञानं दुःखहेतुरित्यपि परास्तम् ॥

वस्तुतस्तु तत्र द्वेष्टृत्वज्ञानेऽपि ताद्दशशब्दोच्चारणाभावे तथा दुःखानुत्पत्तेर्न तज्ज्ञानं दुःखजनकम् अपि तु मदीयदुःखोत्पादोद्देश्यकदुःखानुकूलव्यापारत्वेन तदीयशब्दज्ञानस्य दुःखहेतुत्वम् । अत एव स्वीयविलक्षणदुःखोद्देश्यकव्यापारत्वेन शब्दादेर्ज्ञानात् । स्वीयविलक्षणदुःखोत्पत्तिरिति दिक् ।

आसत्तिः पदाव्यवधानम् । अत एव गिरिरग्निमान् भुक्तं देवदत्तेनेत्यासन्नम् । आसत्तिज्ञानं शाब्दबोधे हेतुः। अत एव तद्भ्रमाच्छाब्दबोधः । न चैवं काष्ठैरोदनं पचति देवदत्त इत्यत्र काष्ठैरित्यस्य पाकेऽनासन्नतापत्तिरोदनमित्यनेन व्यवधानादिति वाच्यम् । प्रकृतान्वयबोधाननुगुणव्यवधानाभावस्य विवक्षितत्वात् । ओदनपदं च काष्ठकरणकौदनकर्मकपाककृतिमान् देवदत्त इति बोधेऽनुगुणमेव। न चैवं श्लोकादेरन्वयबोधो न स्यात् । व्यवहितत्वेन प्रत्यक्षसिद्धपदेषु अव्यवहितत्वेन भ्रमासम्भवादिति वाच्यम् । तत्र श्लोकस्य पदान्वयबोधः । किं तु योजनावाक्यान्तरादेवेति केचित् । तन्न । आकाङ्क्षादिसत्त्वेऽर्थतात्पर्यज्ञाने च सति व्यवहितादप्यन्वयबोधान्न तज्ज्ञानं हेतुर्मानाभावादिति । अत एवाव्यहितपदज्ञानतात्पर्यमासत्तिः तच्चैतत्पदमेतत्पदाऽव्यहितोत्तरमभिसंदधातु इत्यभिसंधापयितुरिच्छा । अत एव मौनिश्लोके वक्तुरभावेऽपि अभिसंधापयितृसत्त्वादासत्तिः । शुकादिवाक्ये भगवत्तात्पर्यसत्त्वादिति परास्तम् । गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यत्राकाङ्क्षादिसत्त्वेऽर्थतात्पर्यज्ञाने सति व्यवहितत्वेन निश्चितेभ्योऽपि शाब्दबोधात्, वक्तुरीश्वरस्यापि तादृशाभिसंधानाभावेन तादृशेच्छाभावेन शाब्दबोधाभावापत्तेश्च।

वस्तुतस्तु समूहालम्बनरूपपदज्ञानाच्छाब्दबोधात् पदज्ञानोत्तरत्वेनैतत्पदज्ञानाव्यवहितोत्तरत्वेन वा परपदज्ञानाभावान्न तादृशज्ञानेतात्पर्यमासत्तिः । अत एवैतत्पदज्ञानाव्यवहितापरपदज्ञानतात्पर्यमपि नासत्तिरिति द्रष्टव्यम् ।

कश्चित्तु वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिः स्व-

रूपसती कारणमित्याहुः । तन्न । तस्याः पदज्ञानव्यापारत्वेन कारणत्वाविवादात् । आसन्नानासन्नविभागाभावापत्तेश्च । किन्तु घटप्रकारककर्मत्वविशेष्यकबोधे घटपदोत्तरकर्मत्ववृत्तिविभक्तिजन्यकर्मत्वाद्युपस्थितिर्हेतुः । सा च स्वरूपसती हेतुः । आकाङ्क्षा तु घटपदोत्तरद्वितीया रूपा । अनयोः पृथक् पृथक् कारणत्वं प्रागेवोक्तम् ।

वस्तुतस्तु प्रागुक्ताकाङ्क्षासत्त्वयोः कार्यतावच्छेदकयोः विनिगमनाविरहः घटमानयेत्यत्र कालिकसम्बन्धेन घटप्रकारकशाब्दबोधे तात्पर्यसत्त्वे इष्टापत्तौ चाकाङ्क्षायाः हेतुत्वं मृग्यमिति दिक् ।

ननु घटमानयेत्यादौ कथं तावत् क्रियाकारकादिघटितवाक्यार्थबोधः । तावत्पदज्ञानानां तावत्पदार्थस्मृतीनां च नष्टत्वादिति चेन्न । तावत्पदानां समूहालम्बनस्मरणे आकांक्षादिविषयकतावत्पदार्थस्मरणात्, द्वितीयक्षणोत्पन्नाकाङ्क्षादिज्ञानसहिताद्वा पदार्थस्मरणात् द्वितीयक्षणे तृतीयक्षणे वा तावत्पदार्थानामन्वबोधस्वीकारात् । अयमेव खले कपोतन्यायेनान्वयबोधः । तदुक्तम् ।

वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति ।

तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति ।

युगपदन्वयित्वं च । क्वचिद्विशेष्ये विशेषणं तत्र च विशेषणान्तरस्य क्वचिदेकविशेष्ये सर्वविशेषणानाम् । नन्वेतावतापि राजपुरप्रवेशन्यायेन जायमानो विशिष्टवैशिष्ट्यावगाहिशाब्दबोधो न स्यात् । न चेष्टापत्तिः । तस्याप्यनुभवसिद्धत्वात् । अत एव

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥

आसत्तिः पदाव्यवधानम् । अत एव गिरिरग्निमान् भुक्तं देवदत्तेनेत्यासन्नम् । आसत्तिज्ञानं शाब्दबोधे हेतुः। अत एव तद्भ्रमाच्छाब्दबोधः । न चैवं काष्ठैरोदनं पचति देवदत्त इत्यत्र काष्ठैरित्यस्य पाकेऽनासन्नतापत्तिरोदनमित्यनेन व्यवधानादिति वाच्यम् । प्रकृतान्वयबोधाननुगुणव्यवधानाभावस्य विवक्षितत्वात् । ओदनपदं च काष्ठकरणकौदनकर्मकपाककृतिमान् देवदत्त इति बोधेऽनुगुणमेव। न चैवं श्लोकादेरन्वयबोधो न स्यात् । व्यवहितत्वेन प्रत्यक्षसिद्धपदेषु अव्यवहितत्वेन भ्रमासम्भवादिति वाच्यम् । तत्र श्लोकस्य पदान्नान्वयबोधः । किं तु योजनावाक्यान्तरादेवेति केचित् । तन्न । आकाङ्क्षादिसत्त्वेऽर्थतात्पर्यज्ञाने च सति व्यवहितादप्यन्वयबोधान्न तज्ज्ञानं हेतुर्मानाभावादिति । अत एवाव्यहितपदज्ञानतात्पर्यमासत्तिः तद्यैत्पदमेतत्पदाऽव्यहितोत्तरमभिसंदधातु इत्यभिसंधापयितुरिच्छा । अत एव मौनिश्लोके वक्तुरभावेऽपि अभिसंधापयितृसत्त्वादासत्तिः । शुकादिवाक्ये भगवत्तात्पर्यसत्त्वादिति परास्तम् । गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यत्राकाङ्क्षादिसत्त्वेऽर्थतात्पर्यज्ञाने सति व्यवहितत्वेन निश्चितेभ्योऽपि शाब्दबोधात्, वक्तुरीश्वरस्यापि तादृशाभिसंधानाभावेन तादृशेच्छाभावेन शाब्दबोधाभावापत्तेश्च।

वस्तुतस्तु समूहालम्बनरूपपदज्ञानाच्छाब्दबोधात् पदज्ञानोत्तरत्वेनैतत्पदज्ञानाव्यवहितोत्तरत्वेन वा परपदज्ञानाभावान्न तादृशज्ञानेतात्पर्यमासत्तिः । अत एवैतत्पदज्ञानाव्यवहितापरपदज्ञानतात्पर्यमपि नासत्तिरिति द्रष्टव्यम् ।

कश्चित्तु वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिः स्व-

गर्भा टत्वविशिष्टप्रत्यक्षोत्तरं प्रागभावस्यासत्त्वेन तद्घटितपदप्रत्यक्षासम्भवादिति चेन्न । यत्र चोत्पत्तिकाले घकारटकारप्रागभावानां स्मृतिः, तत्र टोत्पत्तिकाले प्रागभावविशिष्टो घ इति पदप्रत्यक्षसम्भवात् । पूर्वं प्रागभावसत्त्वात् । यद्वा न प्रागभावगर्भानुपूर्वीप्रत्यक्षम् । प्रागभावस्यातीन्द्रियत्वादसत्त्वाच्च किं तु घनाशविशिष्टटत्वम् ।

न च घकारोत्पत्तिक्षणाव्यवहितक्षणोत्पन्नटकारस्य घनाशविशिष्टत्वाभावात्कथं तत्र पदत्वमिति वाच्यम् । टकारस्य स्थितिक्षणे घनाशविशिष्टत्वसम्भवात् । न च घरट इत्यत्रापि टकारस्य घनाशविशिष्टत्वाद्घटपदत्वापत्तिः । वर्णान्तराव्यवहितत्वेनापि टकारविशेषणात् । एवं च टोत्पत्तिकाले घटत्वनिर्विकल्पकं ततो घत्वविशिष्टप्रत्यक्षटत्वनिर्विकल्पके ततो घनाशविशिष्टटकार इति प्रत्यक्षसम्भवात् । नाशत्वस्यानुपस्थितस्यैव प्रकारत्वात् । यद्वा अव्यवहितोत्तरत्वसंबन्धेन घविशिष्टटत्वमेवानुपूर्वी ।

केचित्तु घज्ञानध्वंसविशिष्टज्ञानविषयत्वं घटज्ञानानन्तरज्ञानविषयत्वं वा टस्यानुपूर्वी, मौनिश्लोके च लिप्यादिक्रमेण ज्ञानक्रमोऽनुमेयः । न चेश्वरोच्चरिते आनुपूर्वी न स्यात् तज्ज्ञानस्यैकत्वेन नित्यत्वेन चानन्तर्याभावादिति वाच्यम् । तत्रान्येषां ज्ञानमादायानुपूर्वीसत्त्वात् । सा च मनसा श्रोत्रेण वा उपनीता टकारे ज्ञायत इत्याहुः ।

ननु तण्डुलादिशाब्दबोधे वृत्त्या तण्डुलादिपदज्ञानजन्या तण्डुलाद्युपस्थितिर्न तत्त्वेन हेतुः । पचतीत्युक्ते प्रत्यक्षादिनोपस्थिततण्डुलकर्मत्वादेः पाकेऽन्वयात् । अत एव तण्डुलप्रकारककर्मत्वविशेष्यकबोधे तण्डुलपदोत्तरविभक्तिरूपाकाङ्क्षा तादृशविभक्तिजन्यकर्मत्वोपस्थिति-

